The Vidagdha-mukha-ma...

# KÁVYAKALÁPA.

Number Third.

Published by

HARIDAS HIRACHAND.



काव्यकलापः

अंकस्तृतीयः

तत्र

विदग्धमुखमंडनंकाव्यंसटीकं

हरिदास वि॰हीराचंदेनाविद्वत्तः

शोधयित्वा

प्रथमावृत्तिः

मुंबय्यांवृत्तदीपमुद्रायंत्रेअंकीकृतः

संवत् १९२१ शाके १७८७



BOMBAY:

PRINTED AT THE "VRUTTADEEP PRESS."

1865.

collated

# KÁVYAKALÁPA.

No. 3

CONTAINING.

Dharmadása.

VIDAGDHA-MUKHA MANDANA,

OR

THE ORNAMENT OF THE MOUTH OF LEARNED WITH NOTES AND EXPLANATIONS IN SANSKRIT.

Published by

HARIDAS HIRACHAND,

BOMBAY:

PRINTED AT THE "VRUTTADEEP PRESS."

(Registered under Act XX. of 1847.)

1865.

PRICE RUPEES ONE.

To,

# Javerilal Umayashanker Esq.,

Late Duxina-fellow, E. College, Bombay,
Member of the Bombay Branch of
the Royal Asiatic Society :

&c. &c.

**THIS WORK**

Is Dedicated,

With feelings of esteem and gratitude for his heart-felt interest in the revival of Sanskrit Literature and his liberality in patronizing Sanskrit Authors and publishers ;

By his most obedient servant,

THE PUBLISHER.

# PREFACE.

In the first number of this *Kavyakalapa*, (collection of Poems) are published 37 poems of ancient famous poets, such as Kàlidàsa &c.; in the second is published a poem in veneration of the Goddess *Laxmi*, named *Laxmisahasra*, made by *Venkatadhvari Acharya*, author of Vishvagunàdarsha and Hastigirichampù; and in this third number I have published *Vidagdha mútha mandana* made by a *Jain* follower named *Dhurmadása*.

The work contains different systems of adoring and tastifying poetry. It is very scarce, and I had been able to procure only one copy of a text with commentary, after much exertions.

I hope the readers will correct the errors and defects occured, owing to the manuscript being only one, as well as the press is newly established.

The fourth number of all works with commentary, has been sent to the press, and will come out in about two months.

In the fifth number will be admitted best poems like those published in the first number, and in the sixth will be introduced small *stotras* or Hymns of *Shri Shankaracharya* &c. relating to *Vedanta*.

H. H.

# अनुक्रमणिका


| नाम | पृष्ठ |
|---|---|
| **प्रथमपरिच्छेदः** | |
| व्यस्तजातिः | ३ |
| द्विर्व्यस्तजातिः | ४ |
| व्यस्तसमस्तजातिः | ५ |
| द्विर्व्यस्तसमस्तजातिः | ६ |
| द्विःसमस्तकव्यस्तजातिः | ७ |
| एकालापकजातिः | ८ |
| प्रभिन्नक | |
| शब्दार्थलिंगप्रभिन्नकः | ९ |
| शब्दार्थविभक्तिभिन्न | १० |
| शब्दार्थवचनभिन्न | १० |
| शब्दार्थलिंगविभक्तिवचनभिन्न | ११ |
| शब्दार्थलिंगवचनभिन्न | ११ |
| शब्दार्थविभक्तिवचनाभिन्न | १२ |
| शब्दार्थलिंगवचनाभिन्न | १२ |
| प्रकारांतरेणप्रभिन्नकजातिः | १३ |
| **द्वितीयपरिच्छेदः** | |
| भेद्यभेदकजातिः | १४ |
| ओजस्विजातिः | १४ |
| रूपकंसालंकारजातिः | १५ |
| सकौतुकजातिः | १६ |
| प्रश्नोत्तरसमजातिः | १७ |
| पृष्ठप्रश्नजातिः | १७ |
| भग्नोत्तरजातिः | १८ |
| आद्युत्तरजातिः | १९ |
| मध्योत्तरजातिः | १९ |
| अंत्योत्तरजातिः | २० |
| कथितापन्हुतिजातिः | २० |
| विषमजातिः | २० |
| वृत्तनामजातिः | २२ |
| नामाख्यातजातिः | २३ |
| तार्क्यजातिः | २८ |
| सौत्रजातिः | २९ |
| शाब्दीयजातिः | २९ |
| शास्त्रजजातिः | ३० |
| वर्णोत्तरजातिः | ३१ |
| वाक्योत्तरजातिः | ३१ |
| **तृतीयःपरिच्छेदः** | |
| चित्रजातिः | |
| श्लोकोत्तरजातिः | ३२ |
| खंडोत्तरजातिः | ३४ |
| पादोत्तरजातिः | ३६ |
| चक्रजातिः | ३७ |

॥ श्री ॥

परमात्मनेनमः

# काव्यकलापः

अंक स्तृतीयः

तत्र

## विदग्धमुखमंडनं सटीकंकाव्य.

॥ सिद्धौषधानिभवदुःखमहागदानां ॥
॥ पुण्यात्मनांपरमकर्णरसायनानि ॥
॥ प्रक्षालनैकसलिलानिमनोमलानां ॥
॥ शौद्धोदनेःप्रवचनानिचिरंजयंति ॥ १ ॥

॥ जयंतिसंतःसुकृतैकभाजनं ॥
॥ परार्थसंपादनसद्व्रतस्थिताः ॥
॥ करस्थनीरोपमविश्वदर्शिना ॥
॥ जयंतिवैदग्ध्यभुवःकवेर्गिरः ॥ २ ॥

॥ आक्रांतेवमहोपलेनमुनिनाशप्तेवदुर्वाससा ॥
॥ सातत्यंबतमुद्रितेवजतुनानीतेवमूर्छांविषैः ॥
॥ बद्धेवातनुरज्जुभिःपरगुणान्वक्तुंनशक्ताऽसती ॥
॥ जिव्हालोहशलाकयाखलमुखेविद्धेवसंलक्ष्यते ॥ ३ ॥

॥ इहानेकेसत्यंसततमुपकारिण्युपकृतिं ॥
॥ कृतज्ञाःकुर्वंतोजगतिनिवसंत्येवसुखिनः ॥

॥ कथितापन्हुतिंचैव । विषमंवृत्तनामकं ॥
॥ नामाख्यातंचताक्यर्थंच । सौत्रंशाब्दीयशास्त्रजे ॥ १२ ॥
॥ वर्णवाक्योत्तरेतद्वत् । श्लोकोत्तरमतःपरं ॥
॥ खंडपादोत्तरेचक्रं । पद्मकाकपदंतथा ॥ १३ ॥
॥ गोमूत्रींसर्वतोभद्रं । गतप्रत्यागतंबहु ॥
॥ वर्द्धमानाक्षरंतद्वद्धीयमानाक्षरंतथा ॥ १४ ॥
॥ शृंखलांनागपाशंच । चित्रंसंशुद्धमेवच ॥
॥ प्रहेलिकांतथात्दृयं । कालसारादिवर्णितं ॥ १५ ॥
॥ अजमारादिकंगूढं । पदपादार्थगूढकं ॥
॥ स्तुतिनिंदांतथाद्यर्थं । सहापन्हुतिबिंदुमत् ॥ १६
॥ क्रियाकारकसंबंध । गुप्तान्यामंत्रितस्यच ॥
॥ गुप्तंतथासमासस्य । लिंगस्यवचनस्यच ॥ १७ ॥
॥ मात्राबिंदुविसर्गाणां । च्युतकान्यक्षरस्यच ॥
॥ स्थानव्यंजनयोश्चापि । च्युतदत्ताक्षरंतथा ॥ १८ ॥

॥ इत्युद्देशकं ॥

॥ पृष्टपदविभागेन । केवलेनैवयद्भवेत् ॥
॥ विदुर्व्यस्तंसमस्तंय । त्समुदायेनपृच्छति ॥ १९ ॥
॥ पृथक् पृच्छते तत् व्यस्तंपृष्टं ॥
॥ पूजायांकिंपदंप्रोक्तमस्तनंकोबिभर्त्युरः ॥
॥ कआयुधलयाख्यातः । प्रलंबासुरविद्विषः ॥ २० ॥
॥ सुनासीरः ॥ इतिव्यस्तसमस्तजातिः ॥
॥ सुःपूजायां ॥ नापुरुषः ॥ सीरोहलं ॥

॥ हेकालिहेपार्वति ॥ कपालैर्नरमुंडैविराजतेकापालि ॥

॥ कोयोगी ॥ तस्यमठःप्रसिद्धः ॥

॥ कीदृशंवदमरुस्थलंमतं । द्वारिकुत्रसतिभूषणंभवेत् ॥

॥ ब्रूहिकांतसुभटःसकार्मुकः । कीदृशोभवतिकुत्रविद्विषां ॥२६॥

॥ अवारितोरणे ॥ इतिद्विर्व्यस्तजातिः ॥

॥ नविद्यतेवारिजलंयस्मिन् तत्अवारि ॥ तोरणेसति ॥ बहिर्द्वारंतु ॥

॥ तोरणं ॥ रणेसंग्रामेअवारितः ॥ नवारयितुंशक्यतइत्यवारितः ॥

॥ पक्षिश्रेष्ठसखीबभ्रू । सुरावाच्याःकथंवद ॥

॥ ज्येष्टेमासिगताःशोषं ॥ कीदृशोऽल्पजलाभुवः ॥ २७ ॥

॥ विवरालीनकुलीराः ॥

। द्विवारंसमुदायेनपृच्छ्यतेतद्भिःसमस्तंपृष्ठं । विवरालीनकुलीराः ।

। विःपक्षी । वरंश्रेष्टं । आलीसखी । नकुलीनकुलस्त्री । इरामदिरा ।

। विवरेषुछिद्रेषुआलीनाःप्रविष्टाः । कुलीराःजलचरजीवविशेषाःयासुताः

॥ विश्वंभराप्रलंबघ्न ॥ व्रीहिमानुषसंयुताः ॥

॥ कथंवाच्याःभवंत्येता ॥ दिनांतेविकसंतिकाः ॥ २८ ॥

॥ कुवलयवनराजयः ॥

। कुवलयवनराजयः । कुःपृथ्वी । वलोबलभद्रः । यवयेवैक्यंय

। वोधान्यभेदः । नरोमनुष्यः । आजिःसंग्रामः । कुवलयानांकमला

। नांवनानांराजयःपंक्तयः

॥ पृष्टंपदविभागेन ॥ समुदायेनयद्भवेत् ॥

॥ विदुर्व्यस्तसमस्तंतदुभयार्थप्रदर्शकं ॥ २९ ॥

अहिःसर्पः । नाःपुमान् । क्षतनयःक्षतःखंडितोनयोन्यायोयेनसः । अन्यायवान् हेअहीन । अहीनांसर्पाणामिनस्वामिन् तत्संबोधनं । अक्षतनयः । नक्षतोनयो न्यायोयेनसःअखंडन्यायवान् । हीनेअक्षिणीयस्यासौहीनाक्षोअंधस्तस्यतनयःपुत्रः । नहीनाक्षतनयोअहीनाक्षतनयः । धृतराष्ट्रोहिहीनाक्षोऽधइतिपौराणिकाः । तत्पुत्रोदुर्योधनोऽहीनाक्षतनयोनभवतीतिकिंतु । अंधपुत्रइत्यर्थः ।

॥ कोमोहायदुरीश्वरस्यविदितःसंबोधनीयोगुरुः ॥
॥ कोधात्र्यांविरलःकलोनवघनःकिंवन्नकीदृग्द्विजः ॥
॥ किंलेखावचनंभवेदतिशयंदुःखायकीदृक्खलः ॥
॥ कोविघ्नाधिपतिर्मनोभवसमोमूर्त्योपुमान्कीदृशः ॥३४
॥ राजीवसान्निभवदनः ॥ इतिद्विर्व्यस्तसमस्तजातिः ॥

राःद्रव्यं हेजीवहेगुरो। सन्सज्जनः । इभवत्हस्तिवत् । नाविद्यतेअःकृष्णोऽस्मीन्नितिअनः । ब्राह्मणोहिकृष्णरहितःकदाचिन्नस्यादित्यर्थः । राजीपंक्तिःवसन्निवासंकुर्वन् । इभवदनः इभयत्हस्तितुल्यंवदनंमुखंयस्यासौ । गणेशइत्यर्थः । राजीवेनकमलेनसान्निभंसदृशंवदनं। मुखंयस्यासौराजीवसान्निभवदनः ॥

॥ द्विःसमस्तंयदापृष्टं ॥ व्यस्तकेनपुनर्भवेत् ॥
॥ तत्द्विःसमस्तकव्यस्तं ॥ कथितंप्रश्नपंडितैः ॥ ३५ ॥

द्विवारंसमुदायेनपृष्ट्वापुनर्व्यस्तकेनपृच्छ्यतेतत्द्विः समस्तकव्यस्तंपृष्ठं ॥

॥ कीदृक्षोसकलजनोभवेत्सुराज्ञः ॥
॥ कःकालोविदितइहांधकारहेतुः ॥
॥ कःप्रेयान्कुमुदवनस्यकोनिहंति ॥
॥ भ्रातृव्यंवदशिरसाजितस्त्वयाकः ॥ ३६ ॥

॥ तत्वतःशिवमपेक्ष्यलक्षणै
॥ रर्जुनःसमितिकीदृशोभवेत् ॥ ४० ॥
॥ दानवकुलभ्रमरहितः ॥ इत्येकालापकजातिः ॥

दानवकुलभ्रमरहितः दानेनमदेनबकुलानांवृक्षाणांभ्रमरेभ्यःसकाशात्हितं हितकृदित्यर्थः ॥ दानवानांदैत्यानांकुलेयोभ्रमोदानवाअर्मीपुष्यंतीतिमिथ्याज्ञानंतेनरहितः ॥

॥ शब्दार्थोलिंगवचनैर्व्यस्तैर्यद्वासमस्तकैः ॥
॥ विभक्त्याचप्रभिन्नयत्तत्प्रभिन्नकमुच्यते ॥ ४१ ॥

शब्दार्थौलिंगेनवचनेनविभक्त्याचभेदंप्राप्तौयास्मिन्तत्प्रभिन्नकंपृष्टं ॥

॥ निर्जितसकलारातिःपृच्छति ।
॥ कोनेकोमृत्योर्भयमृच्छातिमेघात्ययकृताचिराशायाः
किंतिमिरक्षयकारिनिशायाः ॥ ४२ ॥
॥ विधुतारातेजः ॥

॥ हेविधुताराते विधुताःकंपिताः अरातयःशत्रवोयेनसः तत्संबोधनं अजः ब्रह्माकृष्णः शंभुरपिच विधुश्चंद्र :ताराः नक्षत्राणितासांतेजः प्रकाशः ॥

॥ विहगपतिःकंहरवानाहितं कीदृग्भवातिपुरंजनमाहितं ॥
॥ किंकठिनंवोदितंवदधमिन् ।
। यादःपतिरपिकीदृगभयकृत् ४३ ॥
॥ अहिमकरमयः ॥ इतिशब्दार्थलिंगप्रभिन्नकं ॥

॥ अहिंसर्पं अकरं नास्तिकरोराजदंडोयस्मिन्तत् अयोलोहं अहिमकरमयः अहयःसर्पाः मकराःमत्स्यविशेषास्तन्मयः ॥

॥ कपानीये किरणानांउत्करा:समूहा: हेकेकिरणोत्क केकावाणीमयूरस्येत्यमर: केकाविद्यंतेयषांते केकिन: केकिनांमयूराण रणेशब्देउत्क उत्सुक: तत्संबोधनं रा:द्रव्यं ॥

॥ कीदृग्गृहंयाम्यगृहंगतस्य ॥

॥ कास्त्राणमंभस्तरणेजनानां ॥

भूषाकथंकंठनतेनुपृष्ठे मुक्ताकलापैरितिचोत्तरंकिं ४८

॥ हाराविनाव: ॥

॥ हारावि हाइतिखेदे हाइतिराव:शब्दोविद्यतेयस्मिन्तत् नाव:नौका: हेहारा: वोयुष्मान्विना ॥

॥ कवयोवदकुत्रकीदृशाः काठिनंकिंविदितःसमंततः॥

॥ अधुनातववैरियोषितांत्वदिताप:प्रबलोविहायका: ॥ ४९

॥गिरिसारमुखाः ॥ इतिशब्दार्थलिंगविभक्तिवचनभिन्नं ॥

॥ गिरिसारमुखाः ॥ गिरिवाण्यां। सारंप्रधानं । स्फुटोच्चारवन्मुखंवदनंयेषांतेगिरिसाः लोहं उखा: स्थाली: अन्नरंधनरंहांडिका: ॥ ४९ ॥

॥ मेघात्ययेभवतिकिंसुभगावगाहं ॥

॥ कावाविडंबयतिवारणमल्लवेश्याः ॥

॥ दुर्वारवीर्यविभवस्यभवेद्रणेकः॥

॥ काः स्मेरवक्त्रसुभगास्तराणिप्रभाभिः ॥ ५०

॥ सरोजराजयः ॥

॥ सरस्तडागं । जरावयोहानि: । जय: प्रसिद्ध: । सरोजराजय: । सरोजानांकमलानांराजय:श्रेण्य: ॥ ५० ॥

॥ विष्णोः कामनसिमुदंसदातनोति ॥
॥ तुच्छंसच्छरधिमुखंनिगद्यतेकिं ॥
॥ पंचत्वैः सममपमानएवकेषु ॥ ५४ ॥

॥ अभिमानिषु ॥

॥ अभिनास्तिभीर्भयंयस्यतत् । मालक्ष्मीः । अनिषु । नविद्यंतेइषवोवाणाः यस्मिन्तत् । अभिमानिषुगर्ववत्सु ॥

॥ घनसमयेशिखिषुस्यान्नृत्यं कीदृक्षुकिंघनात्पतति ॥
॥ प्रावृषिकस्यनगमनं मानसगमनायकीदृशाहंसाः ॥ ५५ ॥
॥ समुत्सुकमनसः ॥ इतिशब्दार्थलिंगवचनभिन्नं ॥

॥ इतिप्रभिन्नकजातिः

॥ समुत्सु । मुदाहर्षेणसहवर्त्तमानाः समुदस्तेषु कंपानीयं अनसः शकटस्य समुत्सुकमनसः संसम्यक् उत्प्राबल्येन सुअतिशयेन यत्उत्पन्नंतत्समुत्सुकं इष्टार्थोद्युक्तउत्सुकइत्यमरः समुत्सुकंउत्कंठायुक्तंमनोयेषांते ॥

॥ अर्थमात्रैकभेदेन भिन्नंबध्नंतिकेचन ॥
॥ सुकुमारधियस्तच्च विदग्धैर्नादृतंयथा ॥ ५६ ॥
॥ आनंदयतिकोत्यर्थं सज्जनानेवभूतले ॥
॥ प्रबाधयातिपद्मानि तमांसिचानिहंतिकः ॥ ५७ ॥

॥ मित्रोदयः ॥

मित्रोदयः मित्राणांसखीनांउदयोवृद्धिः मित्रस्यसूर्यस्यउदयउद्गमनं ॥

॥ अटवीकीदृशीप्रायो दुर्गमाभवतिप्रिये ॥
॥ प्रियस्यकीदृशीकांता तनोतिसुरतोत्सवं ॥ ५८ ॥

यत्पृष्टंदीर्घश्लेकेनपृच्छयते । तस्योत्तरंस्तोकैरक्षरैर्भवेत्ततओजस्विपृष्टं

॥ कामिन्यास्तनभारमंथरगतेर्लोलाचलच्चक्षुषः ॥
॥ कंदर्पैकविलासनित्यवसतेः कीदृक्पुमानवल्लभः ॥
॥ हेलाकृष्टकृपाणपाटितगजानीकात्कुतस्तेऽरयः ॥
॥ श्वासायासविशुष्ककंठकुहरानिर्यातिजीवार्थिनः ॥ ५ ॥

॥ समरतः ॥

समरतः समंतुल्यंरतंभोगक्रियायस्यसः समरतः संग्रामात् ॥

॥ दैत्यारातिरसौवराहवपुषाकामुज्जहारांबुधेः ॥
॥ कारूपंविनिहंतिकोमधुवधूवैधव्यदीक्षागुरुः ॥
॥ स्वच्छंदंनवशल्लकीकवलनैःपंपासरोमज्जनैः ॥
॥ केविंध्याद्रिवनेवसंत्यभिमतक्रीडाभिरामास्थिताः ॥ ६ ॥

॥ कुंजराः ॥ इत्योजस्विजातिः ॥

कुंपृथ्वीं । राजवृद्धत्वं ॥ अःकृष्णः कुंजराः हस्तिनः ॥

॥ उपमादिरलंकारोबहुधापरिकीर्तितः ॥
॥ यत्नेनकथ्यतेसार्थंसालंकारंतदुच्यते ॥ ७ ॥

॥ अलंकारैः सहवर्तमानंसालंकारंपृष्टं ॥

॥ कल्याणवाकत्वामिवकिंपदमत्रकांतं ॥
॥ सद्रूपतेस्वामिवकः परितोषकारी ॥
॥ कः सर्वदावृषगतिस्त्वमिवातिमात्रं ॥
॥ भूत्याश्रितः कथयपालितसर्वभूतः ॥ ८ ॥

॥ शंकरः ॥

॥ शंसुखं करोतिजभागः शंकरोमहादेवः ॥

॥ सूर्यस्यकातिमिरकुंजरवृंदसिंही ॥
॥ सत्यस्यकासुकृतवारिधिचंद्रलेखा ॥
॥ पार्थश्चकीदृगरिदावहुताशनोभूत् ॥
॥ कामालतीकुसुमदामहरस्यमूर्ध्नि ॥ ९ ॥

॥ भागीरथी ॥ रूपकंसालंकारजातिः ॥

॥ भाकांतिः गीः वाणी रथीरथोविद्यतेयस्यसः भगीरथेनआनीताभागीरथीगंगा ॥

॥ लघुवृत्तेनयत्पृष्टंप्रभूताक्षरमुत्तरं ॥
॥ सकौतुकमितीच्छंतितद्विदस्तदिदंयथा ॥ १० ॥

॥ लघुश्लोकेनयत्पृष्टंपृच्छयते तस्योत्तरंबव्हक्षरैर्भवेत् तत्सकौतुकंपृ

॥ केस्थिराः केप्रियाः स्त्रीणांकोऽप्रियोनक्तमाव्हय ॥
॥ नृत्यभूः कीदृशीरम्यानदीकीदृग्घनागमे ॥ ११ ॥

॥ अगाधवारिपूरजनिततरंगा ॥

अगाः पर्वताः धवाः भर्तारः रिपुः शत्रुः हेरजनि ततरंगा ततोवि र्णोरंगोनर्तनमंडपोयस्यःसा अगाधवारिपूरजनिततरंगा अगाधेनअतल र्शेनवारिपूरेणजलसमूहेनजनिताः उत्पादितास्तरंगाः लहर्योयस्यांसा ॥

॥ काक्तताविष्णुनाकीदृग्योषितांकः प्रशस्यते ॥
॥ असेव्यःकीदृशःस्वामी ॥ कोनिहातानशातमः ॥ १२

॥ कुमुदवनबांधवोदयः ॥ इतिसकौतुकजातिः ॥

कोः पृथिव्याः मुत्कुमुत् पृथिव्याः मध्येप्रीतिंः कृतेत्यर्थः अवनंरक्षणं विद्यतेयस्यासौ अवनवान् रक्षाकरः धवोभर्ता सविशेषणमुत्तरंअत्रकृतं। नास्तिदयायस्यसःअदयः दयारहितः अथवादयदाने नास्तिदयोदानं यस्यसः अदयोअदाता ॥ कुमुदवनबांधवोदयः कुमुदानांचंद्रविकाशि कमलानां वनानांबांधवोभ्राताचंद्रस्तस्योदयः प्रकटभावः ॥

॥ प्रश्नवर्णविधेस्तुल्यंयत्रस्यादुत्तरंवरं ॥
॥ प्रश्नोत्तरसमंतज्ज्ञास्तदाहुःश्रूयतांयथा ॥ १३ ॥

॥ प्रश्नश्चउत्तरंचप्रश्नोत्तरे ताभ्यांसमंयुगपद्वचनमेकीभूतंप्रश्नोत्तरसमंपृष्टं ॥

॥ कंदर्पमदजनकंप्राहुःकाचघटीगदिताच्छतमेह ॥
॥ इत्यादिप्रश्नेयुक्तंयद्भूततदुत्तरमाशुविचिंत्य ॥१४॥

॥ कंदर्पंकामं काचघटी काचःप्रसिद्धोअतिनिर्मलस्तस्यघटीकुपिका ॥

॥पथिकस्तिष्ठतिकष्टंविरहीनाविकआस्तेतकृतरक्षः ॥
॥ इत्यादिप्रश्नेयुक्तंयद्ब्रूहितदुत्तरमुत्तमपुरुष ॥ १५ ॥

॥ इतिप्रश्नोत्तरसमजातिः ॥

॥ पथिमार्गेचलतिसः पथिकः नाविकः पोतवाहः ॥

॥ यस्मिन्नुत्तरमुच्चार्यप्रश्नस्तस्यैवपृच्छ्यते ॥
॥ पृष्टप्रश्नंतदिच्छंतिप्रश्नोत्तरविदोयथा ॥१६॥

॥ यस्मिन्प्रश्नविषयेप्रथममुत्तरस्योच्चारंकृत्वातस्यैवोत्तरस्यपुनःप्रश्नःपृच्छ्यते तत्पृष्टप्रश्नंनामपृष्टं ॥

॥ लक्ष्मणेत्युत्तरंयत्रप्रश्नःस्यात्तत्रकीदृशः ॥

ग्रीष्मेद्विरदवृंदायवनालीकीदृशीहिता ॥ १७

॥ कासारसाहिता ॥

॥ अत्रकासारसाहिताइतिप्रश्नः प्रथमवारमेव द्वितीयवारंतूत्तरं सा क्षिणोहिताग्रियाकाइतिप्रश्नः हंसस्ययोषिद्वरटासरसिस्यतुलक्ष्मणेत्यम सारेणअखातसरोवरेणसाहितासहवर्तमाना ॥

॥ चादयइतियत्रस्यादुत्तरमथतत्रकीदृशःप्रश्नः ॥
॥ कथयत्वरितंकेस्युर्नौकायावाहनोपायाः ॥ १८ ॥
॥ केनिपाताः ॥ इतिपृष्टप्रश्नजातिः ॥

अत्रापिकेनिपाताइतिप्रश्नः प्रथमवारमेव द्वितीयवारंतूत्तरं निप केभवंतीतिप्रश्नः ॥ चादयोनिपातसंज्ञाः केपानीयेनिपतंतितेकेनिपात अलुक्समासःहालेसाइतिभाषा ॥

॥ कथयामुकमित्यादिभंत्काायत्रोत्तरंभवेत् ॥
॥ भग्नोत्तरंतदिच्छंतिकाकुमात्रेणगोपितं ॥ १९ ॥

अनिर्दिष्टंपृष्टंभंत्कायत्रोत्तरंभवेत् तत् भग्नोत्तरं भग्नं उत्तरं यस्मिं तभग्नोत्तरंपृष्टं ॥

॥ भवतइवातिस्वच्छंकस्याभ्यंतरमगाधमतिशिशिरं ॥
॥ काव्यामृतरसमग्नस्त्वमिवसदाकःकथयसरसः ॥ २०

शब्दविकारमात्रेणगोपितं उत्तरमंतपदे सरसस्तडागस्य रसेनशृंगा नासहवर्त्तमानःसरसःपुमान् ॥

॥ वीरिसरूषिरिपूणांनियतंकात्हृदयशायिनीभवति ।
॥ नभसिप्रास्थितजलदेकाराजतिहंतवदतारा ॥ २१

॥ इतिभग्नोत्तरजातिः ॥

अत्राप्युत्तरमंतपदे आराचर्मप्रभेदिनी शत्रूणांमनसिदुःखरूपाआरातारा नक्षत्रमृक्षंभंतारा ॥

॥ यत्पृष्टंप्रश्नवाक्येस्यादादिमध्यांतसंस्थितं ॥
॥ उत्तरंतत्त्रिधाप्रोक्तमादिमध्यांतसंज्ञितं ॥ २२ ॥

॥ प्रश्नानांपदसमुदायेआदौयदुत्तरंभवेत् तत्आद्युत्तरंपृष्टं ॥

॥ भ्रमरहितःकीदृक्षोभवतितरांविकसितःपद्मः ॥
॥ ज्योतिषिकःकीदृक्षःप्रायोभुविपूज्यतेलोकैः ॥ २३ ॥

॥ भ्रमरहितः भ्रमराणां भृंगाणां हितोहितकृत् भ्रमेणामिथ्यामत्यारहितःशुद्धज्ञानवान् ॥

॥ प्रभवःकोगंगायानगपतिरतिसुभगशृंगधरः ॥
॥ केसेव्यंतेसेवकसार्थैरत्यर्थमर्थरतैः ॥ २४ ॥

॥ इत्याद्युत्तरजातिः ॥

॥ प्रभवःउत्पत्तिस्थानं प्रभवोमहांतः ईश्वराः आद्युत्तरजातिरिति प्रश्नानांपदसमुदायमध्येयदुत्तरंभवेत् तत्मध्योत्तरंपृष्टं ॥

॥ अयमुदितोहिमरश्मिर्वनितावदनस्यकीदृशःसदृशः ॥
॥ नीलादिकोपलंभःस्फुरतिप्रत्यक्षतःकस्य ॥२५ ॥

सदृशःसमानइवदृश्यतेऽसौतुल्यइत्यर्थः दृशानेत्रेणसहवर्त्तमानःसदृक्तस्यदृशःसनेत्रस्यमनुष्यस्य ॥

॥ गैरिकमनःशिलादिःप्रायेणोत्पद्यतेकुतोनगतः ॥
॥ यःखलुनचलतिपुरुषःस्थानादुक्तःसकीदृक्षः ॥ २६ ॥

॥ इतिमध्योत्तरजातिः ॥

॥ नगनःनगात्पर्वतात् नगतःसन नगात्यर्थः ॥ प्रश्नानांपदसमुदायो यदुत्तरंभवेत्तत्अंतोत्तरंपृष्टं ॥

॥ कस्मिन्वसंतिवदमीनगणाविकल्पं ॥
॥ किंवापदंवदतिकिंकुरुतेविवस्वान् ॥
॥ विद्युल्लतावलयवान्पथिकांगनानाम् ॥
॥ उद्वेजकोभवतिकःखलुवारिवाहः ॥ २७ ॥

वारिवाहः वारिजले वाविकल्पार्थे अहर्दिनं वारिवाहोमेघः ॥

॥ शब्दःप्रभूगतइतिप्रचुराभिधायी ॥
॥ कीदृग्भवेद्वदतशब्दविदोविचिंत्य ॥
॥ कीदृग्बृहस्पतिमतोविदिताभियोगः ॥
॥ प्रायःपुमान्भवतिनास्तिकवर्गमध्यः ॥ २८ ॥

॥ इत्यंतोत्तरजातिः ॥

नास्तिकवर्गमध्यः नआस्तिनविद्यो कवर्गोगकारोमध्येयस्यसःकवर्गमः प्रभूगतोऽयंशब्दः कोऽर्थःयदाप्रभूगतस्यमध्यात्कवर्गीयोगकारोलुप्यते त प्रभूतइत्येवावशिष्यते प्रभूतःप्रचुरवाची नास्तिकानांअपुनर्जन्मवादिनांव समूहस्तस्यमध्येऽतर्वर्ती नास्तिपरलोकेमतिर्येषांतेनास्तिकाइतिव्युत्पत्य षांमतंभिन्नमेवास्ति ॥

॥ पदांतरादिसंबंधात्प्रश्नवाक्येपिसंस्थितं ॥
॥ कथितापन्हुतिःसास्याल्लक्ष्यतेयत्रनोत्तरं ॥ २९ ॥

यत्पृष्ठंप्रश्नवाक्येसंस्थितमपिपदांतरेषुगोपनात्उत्तरंनज्ञायते तत्क तापन्हुतिपृष्टं ॥

॥ पृथ्वीसंबोधनंकीदृक्कविनापरिकीर्तितं ॥
॥ केनेदंमोहितंविश्वंप्रायःकेनाप्यतेयशः ॥ ३० ॥

कथितस्यभाषितस्यापिअपन्हुतिनिन्हवनंयस्मिन्तत् कविनाइतिउत्तरं
हेकोहिपृथ्वि इनाकामेन कविनाकाव्यकर्त्रा

॥ कस्यमरौदुरधिगमः कमलेकः कथयविरचितावासः ॥
॥ कैस्तुष्यतिचामुंडारिपवस्तेवदकुतोभ्रष्टाः ॥ १ ॥

॥ इतिकथितापन्हुतिजातिः ॥

कस्यइत्युत्तरं कंजलंतस्य कोब्रह्माइत्युत्तरं कैर्मस्तकैरित्युत्तरं कुतः
पृथ्व्याः सकाशादित्युत्तरं पृथ्व्याधिकारात्पातिताइत्यर्थः

॥ यत्रभंगस्यवैषम्यं विषमंतन्निगद्यते ॥
॥ वृत्तनामोत्तरंपृष्टंभवेत्तद्वृत्तनामकं ॥ ३२ ॥

यत्रप्रश्नेभंगस्यरचनायाः दुः करत्वंभवति तत्विषमंपृष्टं

॥ कीदृग्वनंस्यान्नभयायपृष्टेयदुत्तरंतस्यचकीदृशास्य ॥
॥ वाच्यंभवेदीक्षणजातमंबुकंचाधिशेतेगविकोर्चनीयः ॥ ३३ ॥

॥ अहिंस्रमहिमः ॥

अहिंस्रं नसंतिहिंस्राः घातुकाजंतुविशेषाः यस्मिन्तत् ॥ अहिमः न
विद्यतेहिमंअहिमंतस्यअहिमः सतः कोऽर्थः यदाअहिंस्रशब्दात्हिमंदूरीक्रि
यते तदाअस्रंइतितिष्टेत अस्रंनेत्रजलंअश्रुपातः अहिंशेषनागं अः कृष्णः
पूज्यः सन्अधिशेते ॥

॥ प्रायःकार्येनमुह्यंति नराःसर्वत्रकीदृशाः ॥
॥ नाधाइतिभवेच्छब्दो नौवाचीवदकीदृशः ॥ ३४ ॥

॥ सावधानाः ॥ इतिविषमजातिः ॥

सावधानाः सहअवधानेनसमाधिनावर्ततइतिसावधानाः समाधिर्नैय
नेइत्यमरः अव्यग्रचित्ताइत्यर्थः सौ अधा ना त् इतिपदच्छेदः
अस्यार्थः औकारेणसहवर्तमानः सौ नधाअधा धारहितः एवंविध
इतिशब्दः सकारस्यविसर्गः नोः इतिनौवाचि भवेदितियोजना अ
विधिः ना ।इत्यत्र ना धा इतिभिन्नौलिख्येते नाइतिसौ औ
गसहितः क्रियते तदानौइतिस्यात् अधा धाइतिदूरीक्रियते सूइ
विसर्गः क्रियते नौःइत्येवंसिध्यति नौकावाचीजातः ॥ वृत्तानांछंदसां
यस्मिन्उत्तरेतत्वृत्तनामकंपृष्टं ॥

॥ गतक्लेशायासाः विमलमनसः कुत्रमुनयः ॥
॥ तपस्यंतिस्वच्छाः सुररिपुरिपोः काचदयिता ॥
॥ कविप्रेयः किंस्यान्नवलघुयुतैरष्टगुरुभिः ॥
॥ बुधावृत्तंवर्णैः स्फुटघटितबंधंकथयत ॥ ३५ ॥

॥ शिखरिणी ॥

शिखराणिविद्यंतेयस्मिन्नसौशिखरीतस्मिन् शिखरिणीपर्वतेईलक्ष्मीः शि
रिणीछंदः ॥

॥ उरसिमुरभिदः कागाढमालिंगितास्ते ॥
॥ सरसिजमकरंदामोदितानंदनेका ॥
॥ गिरिसमलघुवर्णैरर्णवाख्यातिसंख्यै ॥
॥ गुरुभिरपिकृताकाछंदसांवृत्तिरम्या ॥ ३६ ॥

॥ मालिनी ॥ इतिवृत्तनामजातिः ॥

मालक्ष्मीः अलिनी भ्रमरी मालिनीनामछंदोवृत्तं ॥

॥ एकमेवोत्तरंयत्र सुश्लिष्टत्त्वाद्द्विधाभवेत् ॥
॥ सुप्तिंगतप्रभेदेन नामाख्याततदुच्यते ॥ ३७ ॥

सुबंततिङंतयोर्भेदेनसुगुप्तत्वाद्द्विधाभवेत् यत्रप्रश्नेएकमेवोत्तरं ततनामाख्यतंपृष्टं ॥

॥ समरशिरसिसैन्यंकीदृशंदुर्निवारं ॥
॥ विगतघननिशीथेकीदृशीव्योम्निशोभा ॥
॥ कमपिविधिवशेनप्राप्ययोग्याभिमानं ॥
॥ जगदखिलमनिंद्यंदुर्जनः किंकरोति ॥ ३८ ॥

॥ अभिभवति ॥

नामचख्यातंचनामाख्याते तेविद्येतेऽस्मिन्तत् अभि नास्तिभीर्यस्यतत् भयरहितं भवति भानिनक्षत्राणिविद्यंतेयस्मिन् तत् भवत् यस्मिन् भवति नक्षत्रयुक्ते अभिभवति पराभवति नीचोवृद्धिंगतोदुःखदायकएवभवेदितिनीतिः प्रथमपुरुषैकवचनं ॥

॥ पदमनंतरवाचिकिमिष्यतेकपिपतिर्विजयीननुकीदृशः ॥
॥ परगुणंगदितुंगतमत्सराः कुरुतकिंसततंभुविसज्जनाः ॥ ३९

॥ अनुसरामः ॥ लट् ॥

॥ अनुपश्चाद्वाचि रामेणसहवर्तमानः सरामः अनुसरामः वयंपरमगुणप्रतिअनुसरणंकुर्मः उत्तमपुरुषबहुवचनं लट् ॥

॥ वदतिराममनुष्यजघन्यजो वसतिकुत्रसदालसमानसः ॥
॥ अपिचशक्रसुतेनतिरस्कृतो रविसुतःकिमसौविदधेत्वया ४०

॥ अनुजगृहे ॥

॥ हेअनुजभ्रातः गृहेवसति रामआह मयाअनुजगृहे अनुजगृहितः ॥

॥ भवतिगमनयोग्याकीदृशीभूरथानां ॥
॥ किमतिमधुरमम्लभोजनांतेप्रदेयं ॥
॥ प्रियतमवदनीचामंत्रणेकिंपदंस्यात् ॥
॥ कुमतिकृतविवादाश्चक्रिरेकिंसमर्थैः ॥ ४१ ॥

॥ समादाधिरे ॥ लट् ॥

॥समाअविषम दधिक्षीरजंरेइतिनीचसंबोधनेदीयते रेदास समादधि समानत्वेनस्यापिताः विवादस्यवासमाधानंकृतं ॥ लिट्

॥ वदतानुत्तमवचनंध्वानिरुच्चैरुच्यतेसकीदृक्षः ॥
॥ तवसुहृदोगुणनिवहैरिपुनिवहंकिंनुकर्तारः ॥ ४२

॥ अवमंतारः ॥

॥ अवमंनीचार्थवाचकं तारः तारोऽत्युच्चैर्ध्वनिः अवमंतारः ॥ आस्मिन् णिरिपूणामपमानंकरिष्यंतीत्यर्थः तारसइत्यस्यरूपं ॥

॥ कीदृक्तोयंदुस्तरंस्यात्तितीर्षोः ॥
॥ कापूज्यास्मिन्खड्गमामंत्रयस्व ॥
॥ दृष्ट्वाधूमंदूरतोमानविज्ञाः ॥
॥ किंकर्तास्मिप्रातरेवात्प्रयावसं ॥ ४३ ॥

॥ अनुमातासे ॥ लुट्लकारः ॥

नविद्यतेनौयत्रततअनु नौकारहितमित्यर्थः माताजनित्री हेअसे हे ड्ग अनुमातासे त्वमनुमानंकरिष्यसि लुट् ॥

॥ कामुकास्युः कयानीचाः सर्वकस्मिन्प्रमोदते ॥
॥ आर्थिनः प्राप्यपुण्याहंकरिष्यध्वेवसूनिकिं ॥ ४४ ॥

॥ दास्यामहे ॥

॥ दास्यादासीचात्रभल्येनक्रीतोवश्यावागृह्यते महेमहोत्सवे महउद्धवउत्सवइत्यमरः वयंदास्यामहे दानंदास्यामः ॥

॥ कोदुःखीसर्वकार्येषुकिंभृशार्थस्यवाचकं ॥
॥ योयस्माद्विरतोनित्यंततः किंसकरिष्यति ॥ ४५ ॥

॥ प्रयास्यति ॥ ऌट् ॥

प्रयासआयासोऽस्यास्तिसः प्रयासी अतिअयमर्थे प्रासिद्धः प्रयास्यति प्रकर्षेणतत्स्थानंविमुच्यगमिष्यति ऌट् ॥

॥ विद्यंतइतिसमानार्थः शब्दः कोचिरयतिमुद्रांकिं ॥
॥ कथमपियदितेकोपः स्यात्त्वांसुजनकिंकरोतुवद ॥

॥ संत्यजतु ॥

संतिविद्यंते अजतु अलाक्षा लाक्षाव्यतिरिक्तमन्यत्किंचिदपिमुद्रिकामणिस्थापयितुंमंचशक्नोति अयंभावार्थः संत्यजतु सः मांसंत्यजदूरेणगच्छतु इत्यर्थः

॥ मेघात्ययेभवतिकासुभगावगाहा ॥
॥ वृत्तंवसंततिलकाकियदक्षराणां ॥
॥ भोभोकदर्यपुरुषाविपुवद्दिनंच ॥
॥ वित्तंचवःसुबहुतत्क्रियतांकिमेतत् ॥ ४७ ॥

॥ नदीयतां ॥ लोट् ॥

नदीप्रसिद्धा इयतां एतत्परिमाणमेषां तानिइयंतितेषां एतावदक्षराणामेव

भवति अस्माभिर्नदीयतां लोट् ॥

॥ कामाद्यतिमकरंदैस्तनयंकमसूतजनकराजसुतां ॥
॥ कथयकृषिविलसस्यंपङ्कंकिमचीकरस्त्वमपि ॥ ४८ ॥

॥ अलीलवं ॥

अलिःभ्रमरः लवं लवनामानंपुत्रं अहंअलीलवं छेदनमकारयं

॥ पृच्छतिपुरुषःकेऽस्यांसमभूवन्वज्रकृत्तपक्षतयः ॥
॥ बहुभयदेशंजिगमिषुरेकाकीवार्यतेसकथं ॥ ४९ ॥

॥ मानवनगाः ॥ लुङ् ॥

हेमानव नगाःपर्वताः इंद्रेणहिपर्वतानांपक्षच्छेदःकृतःइतिपौराणिव दंति मानवनगाः हे अनवन नविद्यतेअवनंरक्षणंयस्यसः अनवन तत्संबोधनं हे अरक्षक त्वंमागाःगमनंमाकुर्याः लुङ् ॥

॥ किमकरवमहंहरिर्महीध्रं ॥
॥ स्वभुजबलेनगवांहितंविधित्सुः ॥
॥ प्रियतमवदनेनपीयतेकः ॥
॥ परिणतबिंबफलोपमःप्रियायाः ॥ ५० ॥

॥ अधरः ॥

हेकृष्ण त्वंगोवर्द्धनपर्वतं अधरः हस्तेधृतवान् अधरःओष्ठः

॥ परिहरतिभयात्तवाहितःकं ॥
॥ कमथकदापिनाविंदताहिमतिः ॥
॥ कथयकिमकरोरिमांधरित्रीं ॥

॥ नृपतिगुणैर्नृपतेवरत्वमेकः ॥ ५१ ॥

॥ समरंजयं ॥ लङ् ॥

समरंसंग्रामं जयंजयवादं अहंसमरंजयं रागिणींपृथ्वीमकरवं लङ् ॥

॥ कीदृक्सेनाभवतिरणेदुर्वारा ॥

॥ वीरःकस्मैस्पृहयतिलक्ष्मीमिच्छन् ॥

॥ कासंबुद्धिर्भवतिभुवःसंग्रामे ॥

॥ किंकुर्वीध्वंसुभटजनाभ्रातृव्यान् ॥ ५२ ॥

॥ पराजयेमाहि ॥

पराउत्कृष्टा उत्कृष्टाएवसेनाजयंप्राप्नुयादित्यर्थः आजयेसंग्रामाय हेमहिहे पृथ्वि वयंपराजयेमहि जयेमः ॥

॥ कंसारातेर्वदगमनंकेनस्यात् ॥

॥ कस्मिन्नत्वाष्टिंलभतेस्वल्पेच्छुः ॥

॥ कंसर्वेषांशुभकरमूचुर्द्धीराः ॥

॥ किंकुर्यास्त्वंसुजनसशोकंलोकं ॥ ५३ ॥

॥ विनोदयेयं ॥

॥ लिङ् ॥

विनागरुडेन उदयेसाति परस्योन्नतौसत्यां अयंभाग्यं अयमित्यकारांत शब्दस्यद्वितीयैकवचनं अहंतंविनोदयेयं विनोदेनयुक्तंकुर्यामित्यर्थः विधिसंभावनयोर्लिङ्

॥ वारणेंद्रोभवेत्कीदृक्प्रतियेभंगसंहतेः ॥

॥ यद्यवश्यंतदास्मैकिमकरिष्यमहंधनं ॥ ५४ ॥

॥ समदास्यः ॥

समदास्यः समदंमदसहितंआस्यंमुखंयस्यसः भ्रमराः हिगजानांमद यत्द्रष्यति समदास्यः त्वंदानव्यातिरिष्यः

॥ कालेदेशेयथायुक्तंनरःकुर्वन्नुपैतिकां ॥

॥ भुक्तवंतावलप्स्येतांकिमन्नमकरिष्यतां ॥ ५५ ॥

॥ अहास्यतां ॥ लृङ्- ॥ इतिनामाख्यातजातिः ॥

अहास्यतां हास्यस्यभावोहास्यता नहास्यताऽहास्यताातां युक्तक्रियांकुर्व नकश्चिद्वसेदित्यर्थः अहास्यतां ओहाकृत्यागेक्रियाऽतिमत्तौस्यप् तदन्नं वत्यक्ष्यतामित्यर्थः लृङ् ॥

॥ ज्ञेयंतार्क्यदृशातार्क्यंसौत्रंसूत्रोत्तरैस्तथा ॥

॥ शाब्दियंशब्दसंज्ञाभिः शास्त्रजंशास्त्रभाषया ॥५६ ॥

तर्कशास्त्रेभवंतार्क्यंपृष्टं

॥ हिमानिस्थगिरौस्यातां कीदृशौशशिभास्करौ ॥

॥ कःपूज्यःकःप्रमाणेभ्यो नप्रभाकरसंमतः ॥ ५७ ॥

॥ अभावः ॥

अभी नास्तिभादीप्तिर्ययोस्तौ कांतिरहितौ अः कृष्णःअभावःप्रमाणशास्त्रे सिद्धः अभावोनामसप्तमःपदार्थः प्रभाकरास्तुअभावरूपंसप्तमंपदार्थंप्रमा त्वेननमन्यंते

॥ केप्रवीणाःकुतोहीनंजीर्णवासोंशुमांश्चकः ॥

॥ निराकरिष्णवोबाह्यंयोगाचाराश्चकीदृशाः ॥ ५८ ॥

॥ विज्ञानवादिनः इतितार्क्यजातिः ॥

विज्ञाः विशेषेणजानंतिते चतुराः नवात्नूतनात् जीर्णाद्विवस्त्रनयात् हीनमूल्यंस्यादित्यभिप्रायः इनः सूर्यः विज्ञानवादिनः विशेषेणज्ञानस्यतत्वार्थज्ञानस्यवादोविद्यते येषुते विज्ञानवादिनइतिपदंतर्कशास्त्रेप्रसिद्धत्वात् तार्क्यजातिरिति सूत्रेभवंसौत्रंपृष्टं

॥ कोनयतिजगदशेषंक्षयमथबिभरांबभूवकंविष्णुः ॥
॥ नीचःकुत्रसगर्वःपाणिनिसूत्रंचकीदृक्षं ॥ ५९ ॥

॥ यमोगंधने ॥

यमःकृतांतःअंगपारिशेष्याद्गोवर्द्धनं धने यमोगंधनेपाणिनियव्याकरणमध्येइदंसूत्रमस्ति

॥ किंस्याद्विशेष्यनिष्ठंकासंख्यावदतपूरणिभवति ॥
॥ नीचः केनसवर्गः सूत्रंचंद्रस्यकीदृक्षं ॥ ६० ॥

॥ विशेषणमेकार्थेन ॥ इतिसौत्रजातिः ॥

विशेषणं एका शून्यानांसंख्यापूरकंएकमेवभवति एकादिअंकोलिख्यते बिंदूनांसाफल्यंस्यादन्यथाशून्यमेव अथवाएकद्वित्र्यादिकासंख्या अथवा ऊनानामेकत्रिपंचादीनांपूरण्येकाएवसंख्यासमसंज्ञाकर्त्रीभवेदित्याकूतंअर्थेन इव्येण विशेषणमेकार्थेन इदंचंद्रव्याकरणसूत्रमस्तीति ॥ शब्दानामिदं शाब्दीयंव्याकरणं ॥ शाब्दभवंशाब्दीयंपृष्टं ॥

॥ नश्लाघतेखलः कस्मैसुप्तिङंतंकिमुच्यते ॥
॥ लादेशानांनवानांचतिङांकिंनामकथ्यतां ॥ ६१ ॥

॥ परस्मैपदं ॥

परस्मै आत्मव्यतिरिक्तः परः अन्यस्मैनरस्तीति पदं पदसंज्ञं सुप्तिङंतं

पदं परस्मैपदं नवानांअपितिङांतिप्तस अंतिइत्यादीनांपरस्मैपदस

॥ सततंश्लाघतेकस्मैनीचोभुविकिमुत्तमं ॥
॥ कर्त्तर्यपिरुच्यादीनांधातूनांकिंपदंभवेत् ॥ ६२ ॥

॥ आत्मनेपदं ॥

आत्मनेस्वस्मै पदप्रतिष्ठास्थानं आत्मनेपदं ते आते अंते
दोनिनववचनानिभवंतीतिभावार्थः

॥ किमव्ययतयाख्यातंकस्यलोपोविधयिते ॥
॥ ब्रूतशब्दविदोज्ञात्वासमाहारःकउच्यते ॥ ६३

॥ स्वरितः इतिशाब्दीयजातिः ॥

स्वर स्वरव्ययंस्वर्गोनिपातः इतः इत्संज्ञकस्यरः रितः ह्रस्वादयस्त्रय
स्वराःप्रत्येकमुदात्तानुदात्तस्वरितसंज्ञाःसमाहारःस्वरितइतितात्पर्यार्थः

॥ शास्त्राज्जातंशास्त्रजंपृष्टं ॥

॥ मेघात्ययेभवतिकःसमदःसुभगंचाकिंकमधरन्मुराजित् ॥
॥ कटुतैलमिश्रितगुडोनियतंविनिहंतिकंत्रिगुणसप्तदिनैः ६

॥ श्वासरोगं ॥

श्वासशकः तेषुदिनेषुमैथुनेच्छाभवेत् सरस्तडागं अगंगोवर्द्धनपर्वतं श्व
सरोगं

॥ कीदृक्प्रातर्दीपवर्त्तेःशिखास्यात् ॥
॥ उष्ट्रःपृच्छत्याभजंतेमृगाःकिं ॥
॥ देवामात्येकिंगतेप्रायशोऽस्मिन् ॥
॥ लोकःकुर्यान्नोविवाहंविविक्तः ॥ ६५ ॥

॥ विभाकरभवनं इतिशास्त्रजजातिः ॥

विभा विगताभाकांतिर्यस्यांसा हेकरभउष्ट्र बने विभाकरभवनं विभाकरस्यसूर्यस्यभवनंगृहंतत्सिंहराशिंगतेजीवेलोकाःविवाहादिशुभकार्याणिनकुर्वांति सिंहस्याधिपातिसूर्यः ॥

॥ वर्णएवोत्तरंयत्र तद्वर्णोत्तरमुच्यते ॥
॥ वाक्यंयत्रोत्तरंतत्तु वाक्योत्तरमितिस्मृतं ॥ ६६ ॥

वर्णःएकाक्षरमेवउत्तरंयस्मिन्ततत्वर्णोत्तरंपृष्टे

॥ कौविख्यातावहेःशत्रू शोकंवदतिकिंपदं ॥
॥ कोऽभीष्टोऽतिदरिद्रस्यसेव्यंतेकेचभिक्षुभिः ॥ ६७ ॥

॥ वीहाराः ॥

अहेःशत्रूइतिपाठे विश्वविश्ववी गरुडमयूरौ कौशत्रूभुविविख्यातावितिपाठे उश्चइश्चावि ईश्वरकंदर्पौ हा इतिखेदे राःद्रव्यं वीहाराःतीर्थभूमयःप्रासादाःदेवायतनानिवा

॥ किंमुंचंतिपयोवाहाःकीदृशीहरिवल्लभा ॥
॥ पूजायांकिंपदंकोऽग्निःकःकृष्णेनहतोरिपुः ॥ ६७

॥ कंसासुरः ॥ इतिवर्णोत्तरजातिः ॥

कंजलं सा एनकृष्णेनसहवर्त्तमाना लक्ष्मी सुपूजायां रोऽग्निः कंसासुरः कंसासुरनामादैत्यः वाक्यंएवउत्तरंयस्मिन्ततत्वाक्योत्तरंपृष्टे ॥

॥ दधौहरिःकंशुचिकीदृगभ्रं ॥
॥ पृच्छत्यकःकिंकुरुतेसशोकः ॥
॥ श्लोकंविधायापिकिमित्युदारः ॥

॥ कविर्नतोषंसमुपैतिभूयः ॥ ३८ ॥

॥ अगमकमकरोदिति ॥

तिङ् सुबंतचयोवाक्यमित्यमरः अगंगोवर्द्धनपर्वतं नविद्यतेकंजलंय
अकं हेअक नविद्यतेकंसुखंयस्यसः हेदुःखिन् रोदिति रोदनंव
अगमकमकरोदिति एनंश्लोकंअगम्यंअकरोत्इतिविचारयन्तुष्टोनभ
इदंवृत्तंमयाऽपिदुर्बोधं

॥ लक्ष्मीधरःपृच्छतिकीदृशःस्यात् ॥

॥ नृपःसपत्नैरपिदुर्निवारः ॥

॥ अकारिकिंब्रूहिनरेणसम्यक् ॥

॥ पितृत्वमारोपयितुंस्वकीयं ॥ ६९ ॥

॥ समजानितनयः इतिवाक्योत्तरजातिः ॥ १ ॥

हेसम मालक्ष्मीस्तयासहवर्तमानः समः हेलक्ष्मीधर हेधनवन् वा
ण जनितः कृतोनयोन्यायोयेनसः जनितमयः सजमनितनयः तन
पुत्रः समजनिउत्पादितः

॥ इतिद्वितीयः परिच्छेदः ॥ २ ॥



॥ श्लोकएवोत्तरंयत्रततश्लोकोत्तरमुच्यते ॥

॥ खंडोत्तरंभवेदर्धश्लोकात्पादात्तदुत्तरं ॥

॥ श्लोकएवोत्तरंयत्रतत् श्लोकोत्तरंपृष्टं ॥

॥ कंदेवंकेचयंतिस्फुटरुचिनिशिकिंकीदृशीदुःखिनीस्त्री

॥ कीदृक्चक्रंसदास्तेक्वचतवविजयीप्रावृषंकीदृशंखं ॥

॥ कामाहुः प्रेतयोग्यांकथयसुकृतिनः कीदृशाः स्युः पुमांसः
॥ कंधत्तेकंचधत्तेगगनतलमलंप्रेक्षणीयंजनानां ॥ २ ॥
॥ प्लक्षःकीदृक्चकास्तिस्फुटनवकुसुमाशोकमासाद्यकालं ॥
॥ किंमुंचंत्यंबुवाहाभवदरिनिवहेसंज्वरः किंभवश्च ॥
॥ किंनेत्रप्रावृतिस्यादतिशयलघवः केचकोव्रीहिभेदः ॥
॥ प्रायेणप्रावृषेण्याः प्रियतमदिवसाः कीदृशाः कीदृशास्युः ॥३

॥ अंजनाभमहावारिवाहौघनिचितांबराः ॥
॥ कदंबकंदलीकंदरजः पक्ष्मलवायवः ॥ ४॥

अंकृष्णं जनाः लोकाः भंनक्षत्रं नास्तिहावोमुखविकारोयस्याः साअहावा अराणिनिद्यंतेयस्मिन्ततत्आरि बाहोहस्ते घनोमेघोऽ स्यास्तिततत्घनि चितां बाराः श्रेष्ठाः एकंकदं कंजलंददातिसःकदोमेघस्तं द्वितीयंबकपक्षिणं दलानिपर्णानिविद्यंतेयस्यसः दली कंजलं दराद्भयाज्जातोदरजः पक्ष्यस्यान्नेत्ररोमणि लवाः ह्रस्वकणाः यवोधान्यभेदः अंजनाभमहावारिवाहौघनिचितांबराः अंजनाभाःकज्जलवर्णायेमहावारिवाहाः मेघास्तेषामोघेनसमूहेनानिचितंव्याप्तं अंबरंआकाशंयेषुदिवसेषुते कदंबकंदलीकंदरजःपक्ष्मलवायवः ॥ कदंबानांवृक्षविशेषाणांकंदलीकंदानांचवनस्पतिविशेषाणांवरजोभिः परागैः पक्ष्मलाः पुष्टाः वायवोयेषुते ॥

॥ कुर्याद्दुद्वेगवंतंकमपिनिशिसरः कीदृशंकास्तिवक्रे ॥
॥ वक्तानिंद्यःकयास्यात्परिषदिनियतंमंदसंबोधनंकिं ॥
॥ वर्णापांत्यंकमूचुःकिमसुररिपुणानंदगोपालयेऽस्तं ॥
॥ कःप्रालेयाद्रिपुत्रीकुचकलशलुठत्पाणिरेणांकमौलिः ॥ ५

॥ कीदृक्कस्येहबंधुः सुकृतमपहरत्प्रेयसीकायुगांते ॥
॥ कीदृग्भीतिंविधत्तेधनुरवनिरुहंकंचिदामंत्रयस्व ॥
॥ दैत्यःकंसद्विषाकःकथयविनिहतोगद्गदःकःप्रतीतः ॥
॥ कीदृक्कीदृग्वसंतःप्रियतमभवतःप्रीतयेनित्यमस्तु ॥ ६
॥ कोकिलालापवाचालसहकालमनोहरः ॥
॥ अशोकस्तवकालीनमत्तालिमधुरस्वरः ॥ ७ ॥

॥ इतिश्लोकोत्तरजातिः ॥

॥ कोकि कोकाश्चक्रवाकाःपक्षिणोविद्यंतेयस्मिन्तत् लाला कालइतिप्रद्धं अपवाच हीनवाण्या हेअलस हकारं मात्रिकायां शषसह इतिहकस्यांतत्वं अनःशकटं हरोरुद्रः अशोक शोकरहितोभ्राता तवभवभवति काली संहारकर्त्रीदेवी नमत् नमनशीलं हेतालि ताडनाप्रसिद्धं मधुःनामादैत्यः अस्वरः शब्देनरहितः कोकिलालापवाचालसहकारमनोहरः कोकिलानांपिकानांआलापेनान्योन्यजल्पनेनवाचालाःशब्दाः येसहकाराः आम्रवृक्षास्तैर्मनोहरतिसः अशोकस्तवकालीनमत्तालिमधुरस्वरः अशोकानांवृक्षविशेषाणांस्तवकेगुंछेआलीनाअधिव्याप्ताः येमत्ताअलयोभ्रमरास्तेषांमधुरोऽतिमिष्टः स्वरोध्वानिविशेषोयस्मिन्सः ॥

॥ खंडमर्द्धमेवउत्तरंयस्मिन्ततखंडोत्तरंपृष्टं ॥

॥ काचक्रेहरिणाधनेकृपणधीःकीदृग्भुजंगेस्तिकिं ॥
॥ कीदृक्कुंभसमुद्भवस्यजठरंकीदृग्ययियासुर्वधूः ॥
॥ श्लोकःकीदृगभीप्सितःसुकृतिनांकीदृङ्नभोनिर्मलं ॥
॥ क्षोणीमाह्वयसर्वगंकिमुदितंरात्रौसरःकीदृशं ॥ ८ ॥
॥ कुमुदबनपरागरंजितांभो ॥
॥ विहितगमागमकोकमुग्धरेखं ॥

कुमुद् पृथ्व्याःहर्षोकारि पृथ्विउद्भूताइत्यर्थः अवनंपरा अवनंरक्षणंध नस्यगोपनंतत्रपरासावधाना गरांविषं जितानिपीतानिअंभांसिजलानिये नतत्जितांभः विहितगमा विहितःकृतोगमोगमनंययासा गमकः अ र्थाभिप्रायेणगम्यतेप्राप्यतेसःगमकः अकमुक् कंपानीयंमुंचंतितिकमुचोमे घाः नविद्यंतेकमुचोयस्मिन्तत्अकमुक् मेघैरहितमित्यर्थः हेधरेहेपृथ्वी खंआकाशं कुमुदवनपरागरंजितांभोविहितगमागमकोकमुग्धरेखं कुमुदा नांचंद्रविकाशिकमलानांवनानितेषांपरागेणसुष्ठुगंधेनाकिंजल्केनवारांजितंरंग युक्तंकृतं अंभोजलंयस्मिन्तत् ईदृशंसरः प्रथमविशेषणं पुनःकीदृशं विहितौनिष्पादितौगमागमौगमनागमनेयाभ्यांतौविहितगमागमौ तौचतौ कोकौच ताभ्यांकृत्वामुग्धासुंदरारेखापंक्तिर्यस्मिन्तत् यतस्तौचक्रवाकी चक्रवाकावन्योन्यंवियुक्तौसंतौरात्रौमिलनायतीरात्तीरंपर्यटतः तयोर्गमना गमनेनजलरेखायाःभवात्रात्रौसरईदृशंइतिभावः ॥

॥ मुंडःपृच्छतिकिंमुरारिशयनंकाहंतिरूपंनृणां ॥
॥ कीदृग्वैरिजनश्चकोऽतिगहनःसंबोधयावंचितं ॥
॥ काधात्रीजगतोबृहस्पतिवधूःकीदृक्कविःकादृतः ॥
॥ कोऽर्थःकिंभवताकृतंरिपुकुलंकीदृक्सरोवासरे ॥ ९ ॥

॥ विकचवारिजराजिसमुद्भवो ॥
॥ च्छलितभूरिपरागविराजितं ॥

॥ इतिखंडोत्तरजातिः ॥

हेविकच विगताःकचाःकेशायस्यसः तत्संबोधनं हेवालरहित वारि जलं महाप्रलयेहरिःशेषशय्यायांसमुद्रजलेशेतेजिरावृद्धत्वं आजिसमुद् आ जौसंग्रामेसमुत्सहर्षः भवःसंसारः हेअच्छलित हेअवंचित भूःपृथ्वी इप

रा इः कामस्तेनपराउत्कृष्टा नित्ययौवनवती गाविवाण्यां राःद्रव्य जितंसुगमं विकचवारिजराजिसमुद्भवोच्छालितभूरिपरागविराजितं वि चानांप्रफुल्लितानांवारिजानांकमलानांराजिःपंक्तिस्तस्याःसमुद्भवउत्पन्नउच लितोयोभूरिःप्रचुरःपरागःसौगंध्यंतेनविराजितंशोभितं ॥

॥ पादःश्लोकचतुर्थांशएवउत्तरंयस्मिन्तत्पादोत्तरंपृष्टं ॥

॥ बिभर्तिवदनेनकिंकइहसत्वपीडाकरं ॥
॥ कुलंभवतिकीदृशंगलितयौवनंयोषितां ॥
॥ बभारहरिरंबुधेरुपरिकांचकेनस्तुते ॥
॥ हतःकथयकस्त्वयानगपतेर्भयंकीदृशात् ॥ १० ॥

॥ विषमपादनिकुंजगताहितः ॥

विषंगरलं अपात्सर्पः नश्यंतिपादाश्चरणायस्यसः आनि नास्तिइःकामो यस्मिन्तत्अनि कंदर्परहितं कुंपृथ्वीं जगतासंसारेण अहितःशत्रुः विषमपादनिकुंजगताहितः विषमानांदुर्गमाणांपादानांप्रत्यंतपर्वतानांनिकुं जेषुगहनस्थानेषुगताःअहयःसर्पाःयस्मिन्सःविषमपादनिकुंजगताहिस्तस्मात यत्रपर्वतशिलायाअधस्तात्सर्पाःनिर्गच्छंतिततःपर्वताद्बिभीयते ॥

॥ हरिर्वहतिकांत्यवास्त्यरिपुकागताकंचका ॥
॥ कमर्चयतिरोगवान्धनवतीपुरीकीदृशी ॥
॥ हारिःकमधरद्बलिप्रभृतयोधराकिंव्यधुः ॥
॥ कयासदसिकस्त्वयाबुधजितोऽबुधिःकीदृशः ॥ ११ ॥

॥ कुंभीरमीनमकरागमदुर्गवारिः ॥

॥ इतिपादोत्तरजातिः ॥

कुंपृथ्वीं भीःभयं ईलक्ष्मीः अंविष्णुं गता इनंसूर्यं अकरा ना स्तिकरोराजदंडोयस्यांसा अगंगोवर्द्धनपर्वतं अदुःददतिस्म गवावाण्या वादेनकृत्वाऽरिःप्रतिवादीजितः कुंभीरमीनमकरागमदुर्गवारिः कुंभीराः

नक्राश्चमीनाःमत्स्याश्चमकराश्चकुंभीरमीनमकरास्तेषांआगमौआगमनगम
नेताभ्यांकृत्वादुर्गं दुस्तरंवारिजलंयस्यासौ ईदृशः समुद्रोभवति ॥

॥ चत्वार्यराणिपादाभ्यांनेमिपादद्वयेनच ॥
॥ लिखित्वादक्षिणावर्त्तचक्रंप्रश्नमवेहिमे ॥ १२ ॥

चक्रेणरथपादेनसदृशंश्लोकबंधंविधायप्रश्नःक्रियते इत्यतश्चक्रप्रश्नं ॥

॥ कंचौरस्यच्छिनत्तिक्षितिपतिरनघःकिंपदंवक्तिकुत्सां ॥
॥ क्षोणीसंबोधनंकिंवदतिकमलभूःकाचविश्वंबिभर्त्ति ॥
॥ चक्रांगामंत्रणंकिंकथमपिसुजनःकिंनकुर्यादनार्यं ॥
॥ कीदृग्भोक्तुःपुरंस्यात्पयसिवदकुतोमीनपंक्तिर्बिभेति ॥ १३
॥ किंस्वच्छंशारदंस्याद्वदतिवृषगतिःकोंशुमालीपवित्रः
॥ कोस्मिन्किंजीवनंकांविरचयतिकविर्वन्हिसंबोधनंकिं
॥ नाकांक्षंतिस्त्रियःकंतनुरसुररिपोःकीदृशीकश्चमूकः ॥
॥ सम्यक्प्रीतिंतडागःप्रियतमतनुतेकीदृशःकीदृशस्ते ॥ १४

॥ करंकुकोककुररकलहंसकरंबितः ॥
॥ सरोजकोमलोद्गारनीरसंसक्तमारुतः ॥ १५ ॥

॥ इतिचक्रजातिः ॥

करंहस्तं कु कुशब्दोनिंदार्थः कुपुरुषः हेको हेपृथ्वि हेक हेब्र
ह्मन् कुःथ्वी हेअर आराइतिलोकभाषा कलहं वाग्युद्धं सकरं दंड
उक्तं वित्तःबकादिपक्षिणःसकाशात् सरस्तडागं हेअज हेशंभो कःसू
र्यः अमलःमलरहितः निर्मलइत्यर्थः गाःवाणी हेर हेअमे नीरसं
निर्गतोरसःशृंगारात्मकोयस्मात्सःनीरसस्तंसक्तमासक्तालमामालक्ष्मीर्यस्यां
सा अरुतः नाविद्यतेरुतंशब्दोजल्पनंयस्मिन्सः करंतुकोककुररकलहंसंकर

बितः करंकवःपक्षिविशेषाश्चकोकाश्चक्रवाकश्चकुरराःक्रौंचाश्चकलहंसा
सविशेषाश्चएतैःपक्षिसमूहैःकरंबितोव्याप्तस्तडागःप्रीतिकरोभवेदित्याशय
पुनःकीदृशस्तडागःसरोजकोमलोद्गारनीरसंसक्तमारुतःसरोजानांकमलो.
धिकसौरभ्यवान्यउद्गारःउद्गिरणंनिःश्वाससदृशंयस्मिन्तत् अर्थात्पारिमल
तद्यन्नीरंजलंतेनसक्तोमारुतोवायुर्यस्मिन्तडागेसः

॥ वर्णद्वयद्वयैकैकदलभूतदलाष्टकं ॥
॥सर्वोत्तराद्यवर्णेनपद्मंस्यात्कृतकर्णिकं ॥ १६ ॥

॥ अष्टदलैर्नालेनचसहितंपद्मंप्रश्नोत्तरं ॥ ॥

॥ पुण्यात्मावदकीदृशःसरसिजैःकेमोदिताःकीदृश ॥
॥ स्त्वद्वैरीगतचक्षुषःकुलमभूत्कीदृक्त्वयाकेजिताः ॥
॥ बद्धालिःसलिलाशयःकथयभोःकीदृक्चआक्षेपवाक् ॥
॥ शब्दःकुत्रनतस्करादिकभयंदत्तेभवेत्प्रायशः १७ ॥
॥ अप्पित्तंगविकीदृशंनिगदितोमुक्तःपुमान्कीदृशः ॥
॥ कस्माद्बिभ्यतिकौशिकाभुविकृतःकीदृक्त्वयातस्करः ॥
॥ हस्तीस्यान्ननुकीदृशोबहुमतःशोच्योरणःकीदृशः ॥
॥ कीदृक्षःपुरुषःपराप्रतिहतःकीदृग्भवेद्वासुकिः ॥ १८ ॥
॥ अलयःअपश्यत्अबंधःअहस्तःअगजःअहीनः ॥

॥ इतिपद्मोत्तरजातिः ॥

अलयःएकृष्णेलयोध्यानविशेषोयस्यसः अलयोभ्रमराःअपश्यत् शीङ्
स्वप्ने अदभक्षणे शयनंअत् शीश्चअच्चश्याते अपगतेश्यतीशयनभक्ष
णेयस्यासौअपश्यत् मच्छत्रुः रात्रौशयनंदिवसेचादनंनकरोति भयभीत
त्वात् नपश्यतिविलोकयतितत्अपश्यत् अरयःशत्रवःअरयःनास्तिरयो

वेगोयस्यसः अररे अरेइत्यर्थेअररेइतिपातः अरेनीच हीनसंबोधनेदीय ते अररेकपाटे कपाटमररंतुल्येइत्यमरः अर्थात्कपाटेदत्तेसतिगृहांतस्त स्करादेर्भयंनभवेदित्यभिप्रायः अबंधःअपांपानीयानांअंधोभक्षणंयस्यतत् सकारांतः नास्तिबंधोरज्ज्वादेर्बंधनंयस्यासौअबंधः बंधनरहितइत्यर्थ अ हस्तःदिवसात् नास्तिहस्तौयस्यासौअहस्तःहस्ताभ्यांरहितः अगजः अ गेषुपर्वतेषुजातोऽगजःपर्वतसंबंधी नविद्यंतेगजाःहस्तिनोयस्मिन्सःअगजः हस्तिरहितासेनाशोभांनलभतेइत्यर्थः अहीनं नहीनोऽहीनः समर्थइत्य र्थः अहीनः अहीनांसर्पाणांइनःस्वामी ॥

॥ काकस्येवपदंत्र्यस्रंयत्तत्काकपदंमतं ॥
॥ तिर्यगंधोन्यरेखाभिर्गोमूत्रीद्विपदीद्वये ॥ १९ ॥

॥ काकस्यपदंचरणाकृतिरिवत्र्यस्रंपदंआकारोयस्मिन्तत्काकपदंप्रश्नोत्तरं ॥

॥ कुतःकःस्यात्कीदृक्कथयविषवैद्यस्फुटमिदं ॥
॥ रिपोःकःकीदृक्षोभवतिवशगःकश्चकरभः ॥
॥ प्रवीणःसंबोध्यःसुभगवदकौरत्नवचनौ ॥
॥ सुरूपेविख्यातिंजगतिमहतीकागतवती ॥ २० ॥

॥ नागदरतः नागतनयः नागरमणी ॥

॥ इतिकाकपदजातिः ॥

नागदरतः नागानांसर्पाणांदरोभयंतस्मात् ना पुमान् गदरतः गदे षुविषापहारेषुतुषधेषुरतःआसक्तः अयमभिप्रायः यदानागेभ्योभयंभवेत्त दामनुष्योगदरतोविषवैद्यःस्याज्जांगुलीविद्याविशारदःस्यात् कुतश्चित्सर्प कीलनमंत्रपठेत् ना पुमान् गतनयः गतस्त्यक्तोनयोन्यायोनीतिर्य येनासौ नागतनय नागानांहस्तिनांतनयः पुत्रः हेनागर हेविचक्षण

मणी चंद्रकांतिप्रमुखौहीरकौ नागरमणो नागानांनागकुमारदेवाविः
णांरमणस्त्री तासांतौसौंदर्यविशेषणश्लाघ्यते ॥

॥ गोर्वृषभस्यमूत्रंवक्रगत्याजायतेतद्वद्बंधोयस्याः सागोमूत्रीप्रश्नोत्तरं

॥ कामाहुर्युवतीममंगलवतीकीदृग्ग्रहाणांगतिः ॥

॥ संबोध्यावदमत्स्यवेधनपरः कीदृग्भवेत्पामरः ॥

॥ कीदृग्वाल्मिकवेश्मकोस्तनमुरोधत्तेसुरैरुच्यते ॥

॥ गीः कीदृक्‌नकदापिकंबुरहितंवांछंतिकंयोषितः ॥ २१ ॥

॥ कीदृक्पांथकुलंतमोहरतिकाकिंचक्रसंबोधनं ॥

॥ रम्याचंपकशाखिनः कथयकाकश्चाटचोऽर्थेभवेत् ॥

॥ किंक्षिप्तंबलिवैरिणामुरारिपोःकाव्हाश्मशानेस्तिका ॥

॥ क्ष्माकीदृग्भवतिस्मपूर्वमधुनाकीदृक्पुनर्वर्त्तते ॥ २२ ॥

॥ अजरामशुभाचारवलिशीलविनोदिता ॥

॥ भुजंगमनिभासारकलिकालजनोचिता ॥ २३ ॥

॥ इतिगोमूत्रजातिः ॥

अजरां नास्तिजरावृद्धत्वंयस्याःसातां अशुभा शुभकारिणीनभवति
हेचार हेगते वलिशी वलिशमस्यास्तिसः बडिशंमत्स्यवेधनमित्यमरः
लवि लवोनामासीतारामयोःपुत्रः लवोविद्यतेयस्मिन्ततूलवि ना पुमा
न् उदिता उदयंप्राप्ता यस्यपुरुषस्ययादृशाउदयोभवतितस्यतादृशीदेव
वाणीभवेदितिभावः भुजंहस्तं गमनि गमनंचलनंपर्यटनंविद्यतेयस्यतत्
इनंतः भा कांतिः हेसार सहअरैस्तिर्यकाष्ठविशेषैर्वर्त्तमानंसारं तत्सं
बोधनं कलिका कोरकः अविकसितकलीत्यर्थः अलज्प्रत्ययः आ
लजाटचौबहुभाषिणी अनःशकटं हेअ हेकृष्ण चितापसिद्धाअजरा

मशुभाचारबलीशीलविनोदिता अजश्चरामश्चाजरामौ अजोदशरथपिता रामश्चसीतापातिः तयोःशुभेनआचारेण तथाबलिराजाप्रसिद्धः वामनेनयोयाचितः तस्यशीलेनआचारेणचविनोदिताहर्षंप्रापिता इतिपूर्वमासीत् अधुनाकीदृशीपृथ्वी भुजगमनिभासारकलिकालजनोचिता भुजंगमैः सर्पैर्निभास्तुल्याःवक्रगतयोयेऽसाराः निःसत्वाःकलिकालजनाः कलियुगमनुष्यास्तेषांमनुष्याणामुचितायोग्या

॥ वर्णेनैकेनचद्वाभ्यांसर्वैर्वासर्वदिग्गतैः ॥

॥ उत्तरंसर्वतोभद्रंदुष्करंतदिदंयथा ॥ २४ ॥

॥ सर्वतःसमंतात्वर्णस्वरान्संगृह्यप्रश्नोत्तरंक्रियतेऽतः ससर्वतोभद्रप्रश्नोत्तरं ।

॥ कस्त्यागेधातुरुक्तस्तवरिपुत्दृदिकाभूषणंकेस्तनानां ॥

॥ कोदुःखीकश्चशब्दोवदतिवदशुचंकौरिपूख्यातवीर्यौ ॥

॥ शृंगारीकीदृशः कारणशिरसिभयाद्भंगमाप्नोतिसेना ॥

॥ कोदानार्थाभिधायीशिरसिशिरसिकौयुद्धयतः संप्रत्दृत्य २५

॥ कीदृक्कोयार्थिनीस्त्रीभवतिमदकरः प्रायशःकोदुराढ्यो ॥

॥ कस्मिन्मंदायतेसौनियतमुडुपतिः प्रेयसीकामुरारेः ॥

॥ विख्यातौवाहनौकौद्रुहिणमुरभिदोः कीदृगाखेटकस्त्री ॥

॥ कीदृंगैवाचिराभासमितिगतभयाः केगतौकश्चधातुः २६

॥ हारावी ॥ इतिसर्वतोभद्रजातिः ॥

कस्त्यागइतिश्लोकद्वयेएकोनविंशतिपृष्ठानिसंति हरावीत्यक्षरत्रयेष्वेकोनविंशत्यूत्तराणिज्ञेयानिधीमाद्भिः हारावीत्यतएवहइति ओहाकूत्यागे ॥ १ ॥ आरा आराचर्मप्रभेदिका चर्मकाराणांचर्मवेधनशस्त्र शत्रूणांत्दृदिआरासदृशंदुःखंवर्तते ॥ २ ॥ हाराः पुष्पाणांमुक्तानांचहाराः प्रसिद्धाः ॥ ३ ॥

अहावी नविद्यतेहावोमुखविकारोयस्यासौअहावी दुःखिनोजनस्यमुखेहा हास्यादिविक्रियानभवेदित्यभिप्रायः ॥ ४ ॥ हा हाइतिखेदे ॥ ५ ॥ वी उश्चइश्चवी उः ईश्वरः इः कामः ईश्वरानंगयोर्वैरंप्रसिद्धमेवास्तिअनं हिरुद्रेणदग्धः ॥ ६ ॥ हावी मुखविक्रियाहास्यादियुक्तः ॥ ७ ॥ अवी वीरैः सुभटैः रहिता अवीरासेनाभनक्ति ॥ ८ ॥ रा रोदने रा इत्य धातुर्दानेऽस्ति ॥ ९ ॥ अवी मेषौ ऊर्णायू ॥ १० ॥ श्लोक ॥ २५ अर्वीहा अश्रुजलेईहावांछायस्याः साअर्वीहा ॥ ११ ॥ राः द्रव्यं ॥ १२ राहौ विधं ओदे ग्रहे ॥ १३ ॥ ई लक्ष्मीः ॥ १४ ॥ वी विश्वाविश्र्वर्व पाक्षिणौ हंसगरुडावित्यर्थः ब्रह्मणोवाहनंहंसः कृष्णस्यवाहनंगरुडइतिप्र सिद्धं ॥ १५ ॥ वीहा विषुपक्षिषुईहावांछायस्यासा ॥ १६ ॥ वीरा विग ताइराजलंयस्यांसावीरा जलरहितानभवतीत्यर्थः ॥ १७ ॥ वीराः यो द्धारः ॥ १८ ॥ हाओहाङ्गतौ ॥ १९ ॥ एतेसर्वेऽप्यर्थाःहारावीएते ष्वेववर्णेषुभवंत्यतएव सर्वतोभवतीतिसर्वतोभद्रंनामयथार्थं ॥

॥ प्रतिलोमानुलोमाभ्यामुत्तरेणगतागतं ॥

॥ मध्यवर्णविलोपेनतच्चानेकप्रकारकं ॥ २७ ॥

गतंचप्रत्यागतंचगतप्रत्यागते तेविद्येतेयस्मिन्तत्गतप्रत्यागतंप्रश्नोत्तरं

॥ वदवल्लभसर्वज्ञ साधुर्भवतिकीदृशः ॥

॥ गोविंदेनानासिक्षिप्ते नंदवेश्मनिकाऽभवत् ॥ २८ ॥

॥ क्षीरनदी ॥

॥ अनेकप्रकारकंभवति क्षीरनदी एतच्चपदंप्रतिलोमंवाच्यं प्रतिलोमो वामावाचनाअनुलोमोदक्षिणवाचनाच दीनरक्षीइत्येवंस्यात् अस्यायमर्थः दीन ान् दुः स्थान् भिक्षाचरादीन् रक्षतइत्येवंशीलोदीनरक्षी दीनपा

लकइत्यर्थः क्षीरनदी क्षीरंदुग्धंतस्यनदीजाता द्वितीयवारंअनुलोमंवाच्यं ॥

॥ यत्नादन्विष्यकाग्राह्यालेखकैर्मसिमाछिका ॥
॥ घनांधकारनिःशंकंमोदतेकेनबंधकी ॥ २९ ॥

॥ नालिकेरजा ॥

॥ नालिकेरजा ॥नालिकेराज्जातानालिकेरजा ॥ नालिकेरफलंप्रसिद्धं ॥ तद्वृक्षसक्तपत्रांतःशलाकायाः ॥ लेखिनीसमीचीनाभवेत् ॥ एतदेवप्रतिलोमंवाच्यते ॥ जारकेलिना ॥ उपपतिस्तुजारस्यात् ॥ जारेणसहकेलिःक्रीडातया ॥

॥ असुरसुरनरेंद्रैरुह्यतेकाशिरोभि ॥
॥ स्तनुरपिशुचिवस्त्रेकातिविस्तारमेति ॥
॥ वदतिकमलयोनिःसेव्यतेकेनपुष्पं ॥
॥ मधुरमसृणमृद्वीकाभवेदुत्पलस्य ॥ ३० ॥

॥ मालिका ॥ कालिमा ॥

मालिका मालाएवमालिका पुष्पादिमालादेवानांशिरसिशाश्वतीभवत्येव तदेवप्रतिलोमंवाच्यं कालिमा श्यामता उज्ज्वलेवस्त्रेमषीबिंदुरूपाऽपिबहुविस्तारंप्राप्नुयादितिभावः कालिना हेक हेब्रह्मन् अलिनाभ्रमरेण तदेवप्रतिलोमंवाच्यं नालिका नालीएवनालिका नालं इदंचप्रश्नचतुष्टयमंथामाकृत्यालिखित्वावाचनीयंतथाकृतेमध्यस्थोलिकारश्चतुरोवारान्वाच्यते

॥ हिमांशुखंडंकुटिलोज्ज्वलप्रभं ॥
॥ भवेद्वराहप्रवरस्यकीदृशं ॥
॥ विहायवर्णपदमध्यसंस्थितं ॥

॥ नकिंकरोत्येवजिनःकरोतिकिं ॥ ३१ ॥

॥ दंष्ट्राभं ॥

दंष्ट्राभं दंष्ट्रादाढा दंष्ट्रावत्आभाशोभायस्यतत् अथवा दंष्ट्राइवभ
तिदीपतेतत् द्वितीयायामुदयंप्राप्तश्चंद्रोवक्रोज्ज्वलगुणेनसूकरदंष्ट्रयास
पमीयते दंष्ट्राभमित्यत्रमध्यस्थः ष्ट्राइतिवर्णस्त्यज्यते पश्चाद्गतप्रत्याग
तेत्यावाच्यं तच्चदभंनितिस्यात् जिनोदंभंकपटंनकरोति विपरीतवा
नयाभंदामितिस्यात् जिनोभंदंकल्याणंकरोति भादिकल्याणे एवंमध
स्थितवर्णलोपेनगतप्रत्यागतंदर्शितं ॥

॥ वसंतमासाद्यवनेपुकोदृशाः ॥

॥ पिकेनराजंतिरसालभूरुहाः ॥

॥ निरस्यवर्णद्वयमत्रमध्यमं ॥

॥ तवद्विषांकात्यतमातिथिश्चका ॥ ३२ ॥

॥ कांतगिरा ॥ इतिगतप्रत्यागतजातिः ॥

कांतगिरा कांतामनोहरागीर्वाणीयस्यासौकांतगीःतेनकांतगिरा अत्रोत्त
मध्यादनुस्वारअयंहिमंथानाकृतिचित्रबंधः मंथानं रवाइंनुंपूलइतिभाष
तस्यकृतेराकारः तद्वाच्चित्रबंधः तकारगिकाररूपंवर्णद्वयंत्यक्त्वावाच्यं
कारांबंदिगृह वामवाचनया राका राकापूर्णनिशाकरे पूर्णमासेज
तत्वाद्राकापूर्णमासी अनेकप्रकारकंदर्शितं

॥ आदौमध्येतथांतेवावर्द्धंतेवर्णजातयः ॥

॥ एकाद्वित्रादयोयत्रवर्द्धमानाक्षरंहितत् ॥ ३३ ॥

वर्द्धमानानिअक्षराणियस्मिन्ततत्वर्द्धमानाक्षरंप्रश्नोत्तरं

॥ किमनंततयाख्यातंपादेनव्यंगमाव्हय ॥

॥ जनानांलोचनानंदंकेतन्वंतिघनात्यये ॥ ३४ ॥

खं आकाशं आकाशस्यसर्वत्रवर्त्तमानत्वादंतोनास्ति हेखंज हेखोड खंजनाः मध्यदेशेपोदनोनामपक्षिविशेषःखंजनउच्यते अत्रत्वेकैकाक्षरवृध्याउत्तरत्रयंकृतं

॥ उरःस्थलंकोत्रविनापयोधरं ॥
॥ बिभर्त्तिसंबोधयमारुताशनं ॥
॥ वदंतिकंपत्तनसंभवंजनाः ॥
॥ फलंचकिंगोपवधूकुचोपमं ॥ ३५ ॥

॥ नागरंगं ॥

ना पुमान् हेनाग हेसर्प नागर नगरे भवोनागरस्तं नागरंगं नारंगीफलं अत्रैकैकाक्षरवृध्याप्रश्नोत्तराणिद्रष्टव्यानि

॥ प्रायेणनीचलोकस्यकःकरोतीहगर्वतां ॥
॥ आदौवर्णद्वयंदत्वाब्रूहिकेवनवासिनः ॥ ३६ ॥

॥ शबराः ॥

राःद्रव्यं शबराःभिल्लाः इतिपाश्चादक्षरप्रदानेनोत्तरंदर्शितं

॥ सानुजःकाननंगत्वानैकषेयान्जघानकः ॥
॥ मध्येवर्णत्रयंदत्वारावणःकीदृशोवद ॥ ३७ ॥

॥ राक्षसोत्तमः ॥

रामःदाशरथिः एतस्यएवोत्तरस्यरकारमकारयोर्मध्येत्रीण्यक्षराणिक्षसोत्तइतिलिखित्वावाच्यं राक्षसोत्तमःइतिस्यात् राक्षसानांमध्येउत्तमःश्रेष्टः इत्येवंमध्येवर्णप्रदानेनवर्द्धमानंदर्शितं

॥ धत्तेवियोगिनीगंडस्थलपांडफलानिका ॥

॥ वदवर्णौविधायांतेसितात्दृष्टाभवेत्कया ॥ ३८ ॥

॥ लवलीलया ॥

लवली लताविशेषःअस्यैवोत्तरस्यांतेवर्णौद्वौलयाइतिदत्वावाच्यं लवल
या लवोनामपुत्रस्तस्यलीलाक्रीडातया इत्येवमंतेवर्णप्रदानेनवर्द्धमानंद

॥ विष्णोःकावल्लभादेवीलोकत्रितयपाविनी ॥
॥ वर्णावाद्यंतयोर्दत्वाकःशब्दस्तुल्यवाचकः ॥ ३९ ॥

॥ समानः ॥ इतिवर्द्धमानाक्षरजातिः ॥

मालक्ष्मीः एतस्यैवादौसकारोअंतेनकारश्चएतौवर्णौदत्वावाच्यं समान
तुल्यः इत्येवमादावंतेचवर्णप्रदानेनवर्द्धमानंदर्शितं

॥ आदितोमध्यतोंताद्वाहीयंतेवर्णजातयः ॥
॥ एकद्वित्र्यादयोयत्रहीयमानाक्षरंहितत् ॥ ४० ॥

हीयमानानिअक्षराणियस्मिन् ततूहीयमानाक्षरंप्रश्नोत्तरं

॥ वसंतमासाद्यवनेषुराजतेविकाशिकिंवल्लभपुष्पमुच्यतां ।
॥ विहंगमंकंचपरिस्फुटाक्षरंवदंतिकंपंकजसंभवंविदुः ॥ ४१

॥ किंशुकं ॥

किंशुकं किंशुकःपलाशःखाखरो किंशुकेभवंकिंशुकं केसूडंफूल अत्र
तदेवआदिमवर्णपरिहारेणवाच्यं शुकंकीरं शुकपक्षीशुद्धंवदति अत्रापि
द्वितीयस्यापिवर्णस्यत्यागेनवाच्यं कंब्रह्माणं विष्णोर्नाभिकमलेब्रह्माजातः
कःशब्दोब्रह्मवाचकःप्रसिद्धः

॥ समुद्यतेकुत्रनयातिपांसुलासमुद्यतेकुत्रभवंभवेज्जलात् ॥
॥ समुद्यतेकुत्रतवापयात्परिःप्रहर्णिसंबोधनवाचिकंपदं ४२॥

॥ हिमकरे ॥

हिमकरेचंद्रेउद्गतेसति उद्योतत्वादन्यत्रयातोदृश्यतेअतोनयाति तद्विधा नांतासांत्वंधकारएवसमीचीनः उक्तोत्तरमध्यात्हिइतिप्रथमाक्षरत्यागेनक त्राच्यिते मकरे मकर मत्स्येउत्पन्नेसतिद्वितीयाक्षरत्यागेनवाच्यते क रेहस्ते सायुधेउद्धृकेतसतिशत्रुर्भेज्यते तृतीयाक्षरत्यागेनवाच्यते रे रेदासइतिचामत्रणे एवमादितएकैकाक्षरहान्याहीयमानंदर्शितं

॥ तपस्विनोत्यंतमहासुखाशया ॥
॥ वनेषुकस्मैस्पृहयंतिसत्तमाः ॥
॥ इहापिवर्णद्वितयंनिरस्यभोः ॥
॥ सदास्थितंकुत्रचसत्वमुच्यतां ॥ ४३ ॥

॥ तपसे ॥

तपसे तपोगुणाय तपस्विनांहितपएवप्रियंभवति वर्णद्वयत्यागात्सेइत्यव शिष्यते सकारभावःसकारेवर्तते अत्राक्षरद्वयहान्याहीयमानाक्षरोदाहरणं दर्शितं

॥ पुरुषःकीदृशोवेत्तिप्रायेणसकलाःकलाः ॥
॥ मध्यवर्णद्वयंत्यक्त्वाब्रूहिकःस्यात्सुरालयः ॥ ४४ ॥

॥ नागरिकः ॥

नागरिकः नगरनिवासीचतुरोवा एतस्यैवमध्यात्गरीतिवर्णद्वयंत्यज्यते तदानाकइतिस्यात् नाकःस्वर्गः अत्रमध्यवर्णद्वयहानिर्दर्शिता

॥ यजमानेनकःस्वर्गहेतुःसम्यग्विधीयते ॥
॥ विहायाद्यंतयोर्वर्णौगोत्वंकुत्रास्थितंवद ॥ ४५ ॥

॥ यागविधिः ॥ इतिहीयमानाक्षरजातिः ॥

यागविधि:यजनंयाग:यज्ञोदानंवा तस्याविध: यस्यप्रोक्तकरणंवि
होमदानविधिरित्यर्थः यागविधिरित्येतन्मध्यात्प्रथमांतिमवर्णत्यज्यते
विशतितिष्ठति गविशब्देगोत्वंवर्त्तते एवमाद्यंतवर्णयोस्त्यागेनहीयमा
दर्शितं

॥ अन्योन्याक्षरवर्त्तिन्याचैकांतरतयाऽथवा ॥
॥ शृंखलाबंधइत्युक्तोग्रंथिमान्नागपाशकः ॥ ४६ ॥

शृंखलाया:इवशृंखलाकारेणबंधोरचनाविशेष:शृंखलाबंध:प्रश्नोत्तरं

॥ पवित्रमतितृप्तिकृत्किमिहकिंभटामंत्रणं ॥
॥ ब्रवीतिधरणीधरश्चकिमजीर्णसंबोधनं ॥
॥ हरिर्वदतिकोजितोमदनवैरिणासंयुगे ॥
॥ करोतिननुकःशिखंडिकुलतांडवाडंबरं ॥ ४७ ॥
॥ पयोधरसमयः ॥

पयोजलं पश्चात्यवर्णत्यागात् अग्रेतनवर्णग्रहणेनवाच्यते हेयोध अ
पकारस्त्यक्तः अग्रेतनधकारोगृहीतः पश्चात्यरीत्या हेधरहेपर्वत हेरस
हेअजीर्ण पर्वतंप्रातिअजीर्णसंबोधनं उक्तं हेसम मालक्ष्मीस्तयासहव
मान:सम: तत्संबोधनंहेहरे मयः मयोनामाकश्चिदैत्यविशेषोहरेणहत
तिभावार्थः पयोधरसमयः पयोधरस्यसमयःकालः मेघागमेहिमयूराःवि
शेषेणनृत्यंति

॥ भवतिजयिनीकाजैसेनाव्हयाधरभूषणं ॥
॥ वहतिकिमाहिःपुष्पंकीदृक्कुसुंभसमुद्भवं ॥
॥ महतिसमरेवैरीवीरैस्त्वयावदकिंकृतः ॥
॥ कमलमुकुलेभृंगःकीदृक्पिबन्मधुराजते ॥ ४८ ॥
॥ परागरंजितः ॥ इतिशृंखलाजातिः ॥

पराउत्कृष्टा हेराग पूर्ववदत्रापिपाश्चात्योवर्णस्त्यज्यते ऽग्रेतनोगृह्यते रा-गोआरक्तत्वं अधरस्यआरक्ततैवप्रशस्यते गरं गरलं रंजि रंजतीत्येवं शीलंतत् रंगयुक्तं रंजरागे सुगमं परागरंजितः परागेणकेसरेणरंजितः प्रीणितमनाः लोहमयीशृंखलाकटकवत्अन्योन्यंअक्षराणिसंकल्पंते ऽतः-

शृंखलाजातिः

॥ आव्हानंकिंभवातिहितरोःकस्यचित्प्रश्नविज्ञाः ॥
॥ प्रायःकार्यंकिमपिनकुलौकुर्वतेकेपरेषां ॥
॥ पूर्णचंद्रंवहतिननुकापृच्छतिम्लानचक्षुः ॥
॥ केनोदन्याजनितमसमंकष्टमाप्नोतिलोकः ॥ ४९ ॥

॥ नीरापकारेण ॥

॥ नीरापकारेणेत्यस्मिन्नेकाक्षरपरिहारेण अत्रद्वितीयोराइतिवर्णः परित्यज्यते हेनीप हेवृक्षविशेष प्राग्वदेकांतरितवर्णग्रहणेन परे अन्ये आत्मनःकार्याणिसर्वेकुर्वंति परकार्यकर्त्तुविरलः राका पूर्णिमा अत्रपूर्वंयेवर्णाः परित्यक्तास्तएवयोज्यंते हेकाण एकाक्ष सर्वैरेवाक्षरैः नीरापकारेण नीरस्यजलस्यअपकारोअभावस्तेन नीरंविनातृषाकष्टंददाति

॥ कासंबुद्धिःसुभटभवतोब्रूहिपृच्छामिसम्यक् ॥
॥ प्रातःकीदृग्भवतिविपिनंसंप्रवृद्धैर्विहंगैः ॥
॥ लोकःकस्मिन्प्रथयतिमुदंकात्वदीयाचजैत्री ॥
॥ प्रायोलोकेस्थितामिहसुखंजंतुनाकीदृशेन ॥ ५० ॥
॥ वीहारसेविना ॥ इतिएकांतरितशृंखलाजातिः ॥

हेवीर अत्रापिप्राग्वदेकांतरिताएववर्णागृह्यंते रवि रवःशद्वोविद्यतेयस्मिन्तत् रवि शद्वयुक्तं त्यक्ताक्षरसंयोजनयाउत्तरंकर्त्तव्यं हासे हास्ये

सेना सैन्यंवीहारसेविना वीहारउपवनादिषुखेलनं देवायतनं जि
लयंवा वीहारंसेवतेइत्येवंशीलोवीहारसेवी तेन अथवा वीहारस्यसेवा
तेयस्यासौ तेन वीहारसेवायुक्तेनमनुष्येण सुखमनुभूयतइत्यर्थः एकांत
तवर्णगृहणेनात्रशृंखलाबंधस्यद्वितीयोभेदः

॥ ग्रंथिमान्नागपाशकः यस्मिन्नागपाशबंधेग्रंथिर्बध्यतेसः ग्रंथिमान् न
नांसर्पाणांपाशबंधएवनागपाशकः प्रश्नोत्तरं ॥

॥ गोष्ठीविदग्धजनवत्यपिशोचनीया ॥
॥ कीदृक्भवेत्तरणिरश्मिषुकासदास्ति ॥
॥ दुर्वारदर्पदलितामरनायकापि ॥
॥ कीदृश्यकारिसुरशत्रुचमूगृहेण ॥ ५१ ॥

॥ तारकाविरहिता ॥

प्रथमाक्षरद्वयत्यागेनवाच्यते कविरहिता कविनापंडितेनरहिता अंत्याक्ष
रद्वयत्यागेनपश्चादनुपूर्व्यावाच्यते रविकरतारवेःसूर्यस्यकरताकिरणभाव
अत्रप्राक्कविरहितेत्युत्तरंकृत्वा पश्चात्रविकरताइत्युत्तरंकृतं एवंकाविरा
एतयोर्मध्येविंशतिवर्णोनागपाशबद्धः ततबद्धत्वंचबंधदर्शनात्ज्ञेयंप्रश्नार्थवि
द्भिरिति तारकाविरहिता तारकनामादैत्यस्तेनविरहितावियुक्ताकृता

॥ कीदृक्परैरुपहतोभवतिक्षितीशः ॥
॥ पृच्छत्यनुच्चइहकिंविदितंपवित्रं ॥
॥ विच्छिन्नपाणिचरणोजनकोयदीयः ॥
॥ कीदृक्परैरभिहितःसपुमान्पुमःस्यात् ॥ ५२ ॥

॥ व्यंगतनयः ॥ इतिनागपाशजातिः ॥

अत्राप्येकाक्षरपरिहारेणवाच्यते गतनयः गतस्त्यक्तोनयोन्यायोयेनासौ
अन्यायीराजा अंत्याक्षरैकत्यागेनपश्चादनूपूर्व्यावाच्यते हेनत हेअप्रांशो

वामन गव्यं गोरिदंगव्यं गोमूत्रंगोमयंक्षीरंदधिसर्पिः इतिपंच व्यं
गतनयः विगतानिअंगानिहस्तादीनियस्यासौव्यंगस्तस्यायंतनयःपुत्रःइत्यु
च्यपारैः अत्रापिगतनत एतयोर्मध्यस्थतकारोग्रंथिगत्याबाध्यतेऽतएव
नागपाशः नागपाशजातिरिति

॥ भाषाभिश्चित्रितंयत्स्यात्संस्कृतप्राकृतादिभिः ॥
॥ संतश्चित्रंतदिच्छंतिसंशुद्धंत्वेकभाषया ॥ ५३ ॥

संस्कृतप्राकृतादिभिर्भाषाभिर्यच्चित्रितंरचितंस्यात् तत्पृष्ठंचित्रंनाम संस्कृ
तंप्राकृतंचैवसौरसेनीचमागधी पैशाचीचाप्यपभ्रंशोषड्भाषाःविबुधैःस्मृताः

॥ किंनस्यात्कीदृक्षंमहतोपिचतादृशस्यजलराशेः ॥
॥ दिणमणिकिरणाफंसणपडिबुब्भंहोइकिंगोसे ॥ ५४ ॥

॥ कमलवणं ॥

कंपानीयं अलवणं लवणं क्षाररसस्तेनरहितंनभवति समुद्रस्यजलंक्षा
रमेवभवेत् सप्तानामपिसमुद्राणांमध्येप्रथमोलवणसमुद्रः लवणक्षीरदध्या
ज्यसुरेक्षुस्वादुवारयःइतिसप्तसमुद्राः इतिसंस्कृतेनपृष्टंसंस्कृतेनोत्तरंदत्तं अ
थप्राकृतेनपृच्छतिप्राकृतेनैवोत्तरंददाति दिणमणिति अस्यसंस्कृतंलि
ख्यते दिनमणिकिरणस्पर्शनप्रतिबुद्धंभवतिकिंप्रातः इति उत्तरं
कमलवणं कमलानांवनं वणमितिप्राकृतभाषा

॥ मत्स्याहितमंबुकीदृक्पृच्छातिरोगानिशासुकिंभाति ॥
॥ कोऽनंगोवदतिमृगःखेगम्मकेरिसारइणा ॥ ५५ ॥
॥ अविसामभमिरेण ॥ इतिसंस्कृतप्राकृतजातिः ॥

अवि नविद्यंतेवयःपक्षिणोयस्मिन्तत् पक्षिरहितं बकादिपाक्षिणोमत्स्या
न्घ्नंति हेसाम हेसरोग आमोरोगस्तेनसहवर्त्तमानः तत्संबोधनं भंन
क्षत्रं हेएण हेमृग ईःकामः अनंगः अग्रेप्राकृतरीत्याचोच्यते खेग-

म्मइकेरिसारविणा अस्यसंस्कृत आकाशेगम्यतेकीदृशेनसूर्येणइति उ
अविसामभमिरेण अविश्रामभ्रमिणा अविश्रामाविश्रामरहिताभ्रमिर्भ्र
यस्यस:तेन भ्रमिशब्दस्यभमिरइत्यादेश:प्राकृतभाषायां विश्रामरहित
णशीलोसूर्योगगनेभ्रमन्नकुत्रापितिष्ठतीतितात्पर्यं इतिसंस्कृतयुक्तप्राकृ
दाहरणं

॥ प्रायोबिभ्यातिकीदृशादरिगजाद्दंतप्रहीणागजाः ॥
॥ पृथ्वीसंप्रतिकीदृशीनृपतिनाराजन्वतीराजते ॥
॥ प्रायःप्रावृषिकीदृशीगिरितटीधत्तेचकःकज्जले ॥
॥ मभ्भान्नचलिएघणुच्चयदिणेजादंसरोकेरिसं ॥ ५६ ॥

॥ सरदादवताविदबाहिरं ॥

सरदात् रदाभ्यांदंताभ्यांसहवर्त्तमान:सरदस्तस्मात्निर्दंतेनगजेनसदंत
स्तिनासहयोद्धुमशक्यमितिभाव: अवता अवरक्षपालने अवतीत्यवनतेन
अवतारक्षता विदवा विगतोदवोवनवान्हिर्यस्यांसा अहि:शेषनाग: अं
विष्णुं अग्रेअपभ्रंशभाषया मभ्भन्नेइत्यादि अस्यसंस्कृतं मध्यान्हेचलि
तेघनात्ययदिनेजातंसर:कीदृशं उ० सरदादवताविदबाहिरं शरदात
पताषितबाह्यं शरदआतपेनतापितंबाह्यंबहिर्भागोयस्यतत्

॥ कृत्तंकीदृशमंगंदंतभवंकंवदंतिविद्वांसः ॥
॥ अतिलघुवाचिपदंकिंकेरिसुसुयणेसुहोइजणो ॥ ५७ ॥

॥ विस्रतमणु ॥ इतिसंस्कृतापभ्रंशजातिः ॥

विस्रं पूतिगंधस्तुदुर्गंधोविस्रंस्यादामगंधियदित्यमर: पूतिगंधमदित्यर्थ:
तं तकारं लृतुलसानांदंता: इतिवचनात्तकारोदंत्य: अअणु स्तोकं
वा अणु:परमाणु: अग्रेचतुर्थपदेऽपभ्रंशभाषा केरिसइति अस्यसंस्कृतं

कीदृशाःस्वजनेषुभवतिजनः उ० विस्रंतमणु विश्रांतंविश्वस्तंमनोयस्या सौ इतिसंस्कृतयुक्तापभ्रंशोदाहरणं

॥ किंसुखमाहुःप्रायःकेशविकारंचकाहरिर्दयिता ॥
॥ कथमाभाकस्मिन्निशिकोलुच्चद्रवीलपुलिशाणं ॥ ५८ ॥

॥ शमलकम्मालंभे ॥

शसुखं अलकं अलकाश्चूर्णकुंतलाइत्यमरः मालक्ष्मीः अलंअतिशयेन भे नक्षत्रे अतःपरंमागधीभाषा कोलुच्चइवीलपुलिशाणमिति अस्यसंस्कृतं कारोचतेवीरपुरुषेभ्यः उ० शमलकम्मालंभे समरकर्मारंभः समरस्यसंग्रामस्यकर्मकार्यं तस्यआरंभः वीरपुरुषाणामिष्टोभवति वीर-पुरिसाणमितिचतुर्थ्येर्थेषष्ठि मागधीभाषायांसकारस्यशकारः तथारकारस्यलकारइतिभावः

॥ कःस्तंबेरमसुतइतिविख्यातःपृच्छतिस्फुटंहरिणः ॥
॥ अहिणवणयलीलन्नोअसाहुणोकेणउज्जुज्जइ ॥ ५९ ॥

॥ कलभएण ॥ इतिसंस्कृतमागधिकं ॥

हेएण हेमृग कलभःहस्तिपुत्रः द्वात्रिंशद्वार्षिकोहस्तीकलभइति अत्रोत्तरार्द्धेमागधीभाषा अहिणवेति अस्यसंस्कृतं अभिनवनगरीलोकोऽसाधोःकेनत्यजाति ॥ उ० कलभएण करस्यदंडस्यभयेन राज्ञोदंडभयेन लोकाउज्जजंति नपश्यंतीत्यर्थः इतिसंस्कृतयुक्तमागधीभाषोदादाहरणंदार्शितं

॥ कोपारुणंकिमरुणाग्रसरस्यपूर्व ॥
॥ काष्ठाग्रनिष्ठिततनोरुपमानपात्रं ॥
॥ पत्तंखणेणमरणंसअरःसरण्णं ॥
॥ पुत्तेहिकिंपविसिउण्णतुरंगमत्थं ॥ ६० ॥

॥ कपिलपणं ॥

कपिलपनं कपेर्मर्कटस्यलपनंमुखं कपिवदनमथारक्तंभवति अग्रेपै
चीभाषा पत्तमित्यादि अस्यसंस्कृतं प्राप्तंक्षणेनमरणंसगरस्यराज्ञः पु
शद्भिरिहकिंचतुरंगमार्थं उ० कपिलपनं कपिलनाम्नऋषेर्वनं तत्र
प्रवेशंकुर्वद्भिस्तैः तत्क्षणात्एवमरणंप्राप्तमित्यर्थः कपिलपनमित्यत्रपैशा
वनशब्दस्यआदिवकारस्यपकारत्वेनश्रवणात्पनमितिस्यात्

॥ कंप्रीणयंतिजलदाःसैन्यंक्वोदृक्पलायतेसमरात् ॥
॥ धत्तेशिरोधराकिंरुद्रशिरंकेरिसंहोइ ॥ ६१ ॥
॥ चातकंकातरंगं ॥ इतिसंस्कृतपैशाचिकं ॥

॥ चातकंबप्पीहं कातरं भीरु कं मस्तकं चतुर्थपदपैशाचीरुद्रेति
अस्यसंस्कृतं रुद्रशिरःकीदृशंभवति उ० चातकंकातरंकं जातगं
तरंगं जाताउत्पन्नाः गंगायास्तरंगाः लहर्योयस्मिन्सत् रुद्रस्याशि
रसःसकाशात् एवगंगानिःसरति अत्रपैशाच्यांजकारस्थानेचकारगक
स्थानेककारोदर्शितः इतिसंस्कृतयुक्तपैशाचीभाषोदाहरणंदर्शितं ॥

॥ कोवर्णाद्यःक्वचजलधिसुताकंचदीर्घादिसंज्ञं ॥
॥ प्राहुर्बुद्धाःकमजयदसौतार्किकैःकोक्रियंते ॥
॥ आमंत्र्योविःकथयविदितंकिंपदंहेतुवाचि ॥
॥ जाणच्चेडंमहइमहिलासाविबोल्लेइकीसे ॥ ६२ ॥

॥ अरोचम्मारंवादावेहि ॥

अः अकारः मात्रिकायांद्विपंचाशद्वर्णेषुस्वराणांमध्येप्रथमोऽकारः स्वरएव
स्ति यथा अइउण् ऋलृक् इत्यादिषुपाठः ए अःशब्दःकृष्णवाचकस
स्मिन् ए कृष्णे चं चकारं मारं कंदर्पं प्रायेजिनेनैवकंदर्पोजितः जि
नस्यसर्वथाऽपिस्त्रीसंगोनास्ति अतएवेदमुक्तंवदाः अन्योन्यंसंस्कृतजल्पन

दिशास्त्रकलहाः हेवे हेपाक्षिन् यतोऽर्थोअतोऽ ग्रेलौकिकभाषा जाण
वीएइतिअस्यार्थः जाया महिला स्त्री हि णच्ची नर्त्तयितुं ए एत्य इमइआ
याति सा वि अपिनिश्चितं कीदृक् बोल्लेइ जल्पति उ० अएचम्मा
वादाहेवी अएइतिआमंत्रणे चाम्मारंढोलं वादावेहिवादय अस्यसंस्कृत
अयेमृदंगवादय अहंनर्त्तयामि त्वंवाद्यंवादयेतिजल्पंतीआगच्छेत्.

॥ शब्दःकःस्यात्पुरुषवचनंकुंडलौकौस्मरारेः ॥
॥ कामंभोयेर्हेरिरुदहरद्वीवधःपृच्छतीदं ॥
॥ हांडीकुंडीअणिासिनरडाकीसअह्मारएत्थं ॥
॥ जापुच्छिल्लासपुणपारिहारुत्तरंकिसदेइ ॥ ६३ ॥
॥ नाहींकुंभार ॥ इतिसंस्कृतलौकिकं ॥ इतिचित्रजातिः ॥

नापुमान् अही सर्पौ कुंपृथ्वीं हेभार अग्रेलौकिकभाषा हांडीकुंडी
इत्यादि नरडाइतिनरसंबोधनं अह्मारएत्थमस्मदर्थी हांडीकुंडीलोक
भाषा हंडिकाःभांडानि कुंडिकाःकुंडानि कीसकथं अणिसि ना
नयासि इत्येवंजोपुच्छिल्ला यःपृच्छेत् तस्यसपुण सःश्रोता तंपुनः प
रिहारुत्तरं प्रत्युत्तरं कीसदेइ कीदृक्ददाति अस्याएकीभूंतसंस्कृतं हे
नर अस्मदर्थेहंडिकाःकुंडिकाःकथंचनआनयसि एवंयःपृच्छेत् तस्यसःश्रो
ता तंप्रति पुनःप्रत्युत्तरंकीदृक्ददाति उ० नाहीकुंभार नास्तिकुंभा
रः कुंभकारंविनाभांडानिकुतआनयामीत्युत्तरंदीयते इतिसंस्कृतयुक्तलौ-
किकभाषोदाहरणंदर्शितं

॥ एकभाषायासंशुद्धप्रश्नोत्तरं ॥

॥ कोनिवसइसच्छंदंसुंदरागिरिगहणकुंजमब्भम्मि ॥
॥ सहअजुणेणजोब्भुंसिहिगमणोकेरिसोहोइ ॥ ६४ ॥
॥ सरभससवराहवग्गो ॥

अथशुद्धप्राकृतं कोनिवसइइति व्याख्या हेसुंदर सुभग गिरेर्गह
तस्यकाठिनेकुंजमध्ये स्वच्छंदंस्वेच्छया कोनिवसति उ० समग्रेण
रभससवराहवग्गो सरभाअष्टापदाः शशाःप्रसिद्धाः वराहाः सूकरा
षांवर्गसमूहः कुंजेनिलीनस्तिष्ठति निकुंजकुंजौवाक्लीबेलतादिपिहिते।
इत्यमरः तथासहअज्जुणेणेति शिखीमयुरोगमनंयस्यसःशिखिगमनः
र्त्तिकेयोऽर्जुनेनसहयोर्धुंयुद्धंकर्तुंकीदृशोभवति उ० तैरेवाक्षरैः सरभ
वेगवंतः ईदृशाःयेशबराः भिल्लास्तैःसार्द्धं आहवसंग्रामेगच्छतीतिअ
गः आहवग्र्योऽग्रगामीवा ॥

॥ काहरइमणंपइणोगुणगणजुव्वणसलाहणिजुस्स ॥
॥ कयचडचडत्तिसद्दाहुयासाकेरिसाहुंति ॥ ६५ ॥
॥ सरिसवहुया ॥ इतिशुद्धप्राकृतं ॥

काहरइइति गुणानांगणेनसमूहेन यौवनेनच श्लाघ्यस्य चपुनरार्यस्यश्रे
कुलेजातस्य आर्यपुत्रस्येत्यर्थः ईदृशस्यपइणो पत्युर्मनःकाहरति उ०
सारिसवहुया सदृशीसमानवयोगुणावधुका स्नुषाभर्तुर्मनोहरतीतिभावार्थ
तथाकयचडइति कृतःचटचटदितिशब्दोयैस्ते हुताअग्नयःकीदृशाभवंति
उ० तैरेवाक्षरैर्भिन्नार्थेन सरिसवहुया सर्षपैर्हुताः सिद्धार्थैर्हुताहुताश
नश्चटचटायते चटचटच्छब्दंकुरुते

॥ पाणिग्गहणणियंसणुसोहइकाहिंमंडिउं ॥
॥ साहसवदुविवीरपइरिपुबलकाहिंखंडिउं ॥ ६६ ॥
॥ समरंगणेहिं ॥

अथशुद्धाऽपभ्रंशीभाषादर्श्यते पाणिग्गहणेति पाणिग्रहणस्यविवाहस्य
निवसनंवस्त्रंकैर्मंडितंशोभितं उ० समानरंगकरणैः तुल्यरंगप्रदानेन
तथाहेवीर साहसवदुवि साहसेनयुक्तमपि प्रतिरिपुबलंसैन्यं कैःकृत्वा
खंडितंछेदितं त्वयेतिशेषः उत्तरंतदेव समरंगणेहिं संग्रामांगणैः
मयावैरिबलंभग्नमितिभावार्थः

॥ रासिअहकेणउच्चाडणुकिज्जइ ॥
॥ जुयइहमाणसुकेणउविज्जइ ॥
॥ तिसियलोउखणिकेणसुहिज्जुइ ॥
॥ एहपहमहभुवणेगिज्जइ ॥ ६७ ॥
॥ नीरसराएण ॥ इतिशुद्धापभ्रंशं ॥

रासिअहकेणइति रसिकानांशृंगारादिनवरसविज्ञानां अथवा श्रीरागादिषट्त्रिंशद्रागरसविज्ञानां केनोच्चाटनमुद्विग्नचित्तताक्रियते उ० नीरसराएण नीरसश्चासौरागश्चनीरसरागस्तेन दुःस्वरेणरसिकाउद्विजंति उद्वेगंप्राप्नुवंतीत्यर्थः तथायुवत्याःनवयौवनायाः स्त्रियामानसचित्तंकेनोद्विज्यते उ० नीरसरागेण नीरसेनशृंगारादिरसरहितेनयोरागःसंबंधस्तेन अथवा निर्गतोरसोबलंपुरुषार्थत्वं वा नीरसोवृद्धः तस्यरागेण युवत्यैतुवृद्धोनरोचते तथातृषितोलोकःक्षणंक्षणमात्रंस्तोककालंकेनसुखीक्रियते उ० नीरशरावेण नीरस्यजलस्यशरावः पात्रंकोशिकातेन कोशिकाप्रमाणमपिजलंतृषितस्यक्षणंसुखयति तथाएहपहोति एतदयंममप्रश्नःभुवनेकेनगीयते जगात्रितयमध्येगीयतइत्यर्थः उ० नीरसरागेणानितरांरसोनीरसः विशेषेणरसयुक्तोरागः सौकंठ्यंयत्रासौनीरसरागस्तेन अतिसुकंठरागेणममगृहेगीयतइत्यर्थः एवमस्यार्थचतुष्टयंज्ञायते ॥

॥ सुयलोमेहंपुच्छइमेहोवितंतहासुयलं ॥
॥ केणहयासयलसुयाकेणजणोविसइपायालं ॥ ६८ ॥
॥ बलाहकविलेण ॥

अथशुद्धमागधीभाषामाह सुयलोमेहमित्यादि शूकरोमेघंपृच्छति तथामेघोपितंशूकरंपृच्छति उभयोःप्रश्नमाह सगरसुताःसगरचक्रवर्त्तिनःपुत्राःकेनहताइतिशूकरेणमेघःपृष्टः मेघःकथयति उ० बलाहकविले

ण हेवराह हेशूकर कपिलेनऋषिणा तथामेघःशूकरंपृच्छति णजणोविसइयालं जनोलोकः पातालमधोलोकंकेनविशति शूकर थयति उ० हेबलाहक हेमेघ बिलेनभूमिवारेण भूमिवारेणपा लोकेप्रविश्यते

॥ धवलुज्जलेहिंकेहिंसोहइधरणीमसाणदेसस्य ॥
॥ नरयस्सरखाइंनाकहिंसमप्यतिनिहितंकताइपि ॥६९

॥ नलकलंकोहिं ॥ इतिशुद्धमागधिकं ॥

धवलुज्जलेहिमिति स्मशानदेशस्यधरणपृथ्वीधवलोज्ज्वलैःकैःशोभते उ नलकलंकाहिं नराणांमनुष्याणांकरंकैरस्थिपंजरैः अत्ररकारस्थानेलकाः तथानरकस्यरक्षपालाःकैःपरिवेष्टिताःभवंति ते रेवाक्षरैःनरकस्यरंकैर्वरार्वं

॥ पेरीपुच्चदिककनेरावतिकसनोखनोकहिंख ॥
॥ कखाइंनाकाहिंसमप्यातिनिहितंकताइपि ॥ ७० ॥

॥ अहितपरकेहिं ॥

अथशुद्धपैशाचीभाषोच्यते पेरीपुच्चदिइत्यादि वैरीपृच्छति कृष्णःश्या मोघनोमेघोगगनेआकाशेकैःकत्वाराजति इतिपृष्टे उ० अहितपरकेहिं हेअहित हेशत्रो परकेहिं पक्षीहिंतिसंस्कृतं पक्षिभिरिति बलाका प्रभृतिपक्षिभिःशोभते तथाकचाइंइतिनिहितंनिश्चितं कृतान्यपिकत्यानि कार्याणिकैर्नसमाप्यंते अयंभावार्थः संजातमपिकार्यंकैर्भंगमापद्यते नस माप्यते समाप्तभावंनापद्यते अत्रोत्तरं तदेव अहितपाक्षिभिः शत्रुपक्षीयै रेवार्थाः भज्यंते ॥

॥ पत्तूनकिंफटचनोनिचतेहताना ॥
॥ अत्थासनंफचतिचंफानिसूतनस्स ॥

॥ फीत्तूनखोरतरतुक्खसताइपावा ॥
॥ मोहांधकारगहनंलयाकिंलफंति ॥ ७१ ॥
॥ विसमरणं ॥ इतिशुद्धपैशाचिकं ॥

पत्तूनकिमित्यादिवसंततिलकाछंदः अस्यभाषाश्लोकस्यसंस्कृतश्लोकोलिख्य ते प्राप्यार्थकिंभटजनोनिजदेहदानादर्द्धासनंभजतिजंभनिषूदनस्य भुक्का चघोरतरदुःखशतानिपापाःमोहांधकारगहनंवदकिंलभंते ॥ १ ॥ भाष श्लोकस्यव्याख्या फटचनो भटजनः निचतेहताना निजस्यात्मनोदेहस्य दानात् किंपत्तून किंप्राप्य चंफनिमूतनस्स जंभनिषूदनस्य इंद्रस्य अत्यासनं अर्द्धासनं फचाति भजाति इत्येवंशब्दार्थः उ० विसमर णं विषमंचततरणंसंग्रामश्चविषमरणं ततविषमरणं रणशब्दोनपुंसकालिं गेऽप्युक्तः कठिनसंग्रामंप्राप्ययोद्धाइंद्रस्यार्द्धासनंसेवते संग्रामेदेहदानात्स्व र्गप्राप्तिरितिपौराणिकावदंति तथापावा पापाः खोरतरतुक्खसताइ घोर तरदुःखशतानि फीत्तून भुत्का मोहांधकारगहनं मोहोअज्ञानमेवांध कारस्तेनगहनंनिबिडं किंलफंति किंफलंति प्राप्नुवंति हेविद्वन् त्वं लप वद अयमर्थः पापिनोघोरंदुःखंभुत्कांतेकिंफलंलभंते उ० विस मरणं विषेणमरणंनाशंविषमरणं पापिनोऽतेविषंभुत्काम्रियंतेऽयमाभिप्रायः

॥ जानीयाणइनिंदेर्भिभल्लसाकिसवुच्चइबोल्लरेसंभालि ॥
जोतिलसरिसवपीडइजाणाकिंसिभाणज्जइसाविन्नाणी ॥ ७२
॥ सुतेल्ली ॥ इतिशुद्धलौकिकं ॥ इतिसंशुद्धजातिः ॥

अथशुद्धलौकिकभाषामाह जानीयाणइत्यादि यास्त्रीनिद्रयाभिभलाव्या कुलाकिंचित् नीयाणइ नजानाति संभलि हेसखि इतिश्रुत्वाप्रश्नो त्तरत्वं बोल्लरेवद साकिसवुच्चइ साकीदृशीउच्यते उ० सुत्तेल्ली सासुप्तोत्थिताउच्यते तथाजोतिल० योज्ञात्वातिलांश्चसर्षपांश्च पीलय

ति घाणियंत्रेणतैलादिनिष्कासयति सोविन्नाणी सोऽपिज्ञानीशि
कःकीदृक्भण्यतेउच्यते अत्राप्युत्तरं सुतेल्ली धूसरश्चाक्रिकस्तेलि
वचनात् लोकेघांचीतेलीइतिनामप्रसिद्धं

॥ एतावताऽपिदिङ्मात्रंप्रश्नानांदर्शितंमया ॥
॥ येनयेनहिमार्गेणतत्तद्बुद्धिस्तदूह्यतां ॥ ७३ ॥
॥ इतितृतीयःपरिच्छेदः ॥

---

॥ व्यक्तीकृत्यकमप्यर्थंस्वरूपार्थस्यगोपनात् ॥
॥ यत्रबाह्यांतरावर्थौकथ्यंतेताःप्रहेलिकाः ॥ १ ॥
प्रहेलिकानामपृष्ठं
॥ साद्विधार्थीचशाब्दीचविख्याताप्रश्नशासने ॥
॥ आर्थीस्यादर्थविज्ञानाच्छाब्दीशब्दविभागतः ॥ २ ॥
॥ तरुण्यालिंगितःकंठेनितंबस्थलमाश्रितः ॥
॥ गुरूणांसन्निधानेपिकःकूजतिमुहुर्मुहुः ॥ ३ ॥
॥ पानीयकुंभः ॥

॥ साद्विधा आर्थीशाब्दीचाद्विप्रकारायाउदाहरणं श्लोकोक्तविशेषणैरु त :स :कःस्यात् हेविद्वन्त्वंब्रूहि किमुत्तरंदातव्यं विचार्यतामिति एवंविशे षणानांभावेविचार्यमाणे ईदृशोयुवत्याःभर्त्ताज्ञायते भर्त्ताऽपितरुण्यासोत्कं ठमालिंग्यते तथाकांताप्रियोभर्ता उभयथाऽपिनितंबस्थानेगुह्यप्रदेशेतिष्ठे त् तथाचगुरूणांमातृपितृश्वश्रुश्वशुरजनानामग्रेऽपिस्त्रियंकामयते इत्येव मभिप्रायेणबाह्योऽर्थः आभ्यंतरस्तुपानीयकुंभः सोऽपिकूपसरोवरादौज लेनभृत्वाशिरस्यारोपणसमयेतरुण्याहस्ताभ्यामालिंग्यते प्राणादपिकांतः प्रियः कक्षानितंबस्थानेचगृह्यते गुरूणांवृद्धघटानामुपर्युपविश्यकूजति बडबडायते अतोघटएवायंनिश्चयीकृतः इत्येवमांतरार्थः केनापिनज्ञा यते एवमर्थस्यद्वैविध्यंदर्शितं

॥ आपांडुपीनकठिनंवर्तुलंसुमनोहरं ॥
॥ करैराकृष्यतेऽत्यर्थंकिंवृद्धैरपिसस्पृहं ॥ ४ ॥
॥ पक्वाबिल्वफलं ॥ इत्यार्थीजातिः ॥

॥ यत्श्लोकेनोक्तं तत्किं हेश्रोतस्त्वंब्रूही उ० प्रकटभावेनस्त्रियाः कुचयुगलमितिज्ञायते आंतरार्थस्तुपक्वबिल्वफलमिति इतिबाह्यांतरार्थयो भेदेनआर्थीप्रहेलिका

॥ दुर्वारवीर्यसहृषित्वयिकाप्रसुप्ता ॥
॥ श्यामासपत्नहृदयेसुपयोधराच ॥
॥ तुष्टेपुनः प्रणतशत्रुसरोजसूर्ये ॥
॥ सैवाद्यवर्णरहितावदनामकास्यात् ॥ ५ ॥

॥ शस्त्री ॥

॥ उ० शस्त्री लोहस्यछुरिकाश्यामवर्णालोहमयत्वात् सुष्टुपयोजलंधरतिसा लोहेषुपानीयंदीयते पुनः उ० साएवशस्त्रीआद्यवर्णेनशकारेणरहितासतीस्त्रीइतितिष्ठति कीदृशीस्त्री श्यामाषोडशवार्षिकी सुपयोधरा सुष्टुपयोधरौस्तनौयस्याः साः ईदृशीस्त्रीत्वयितुष्टेसतिशत्रूणांहृदयोपरिखेलतेशेतेवा इत्येवंशब्दस्यविभंगादक्षरस्यलोपात्द्वावर्थौकृतौ अतएवशाब्दीप्रहेलिका

॥ सदारिमध्यापिनवैरियुक्ता ॥
॥ नितांतरक्तापिसितैवनित्यं ॥
॥ यथोक्तवादिन्यपिनैवदूतिका ॥
॥ कानामकांतेतिनिवेदयाशु ॥ ६ ॥
॥ सारिका ॥ इतिशाब्दीजातिः ॥

पुनरपरप्रकारेणशब्दभाजनांदर्शयति सदारिमध्येति व्याख्या कांत हेप्रिय भर्त्तः त्वंआशुशीघ्रं इतिपूर्वोक्तंनिवेदयकथय साकामस्यात् यासदासर्वदा अरिणांमध्येस्थिताऽपिवैरिभिर्युक्तान शत्रुसंयुक्तनविद्यते नवैरियुक्ताइतिपाठे वैरेणविरोधेनयुक्तानास्ति एवंविरोधाभा उ० सारिका अत्रैवंविरोधपरिहारेऽर्थोविधेयः शारिकाइतिशद्बमध्ये रिशद्बः वा रिकारोवर्त्तते परं कैश्चित्सार्द्धंवैरंनास्ति पुनश्चयानितंअतिशयेनरक्तारक्तवर्णाऽपिनिर्यंतिताऽश्वेतैव यारक्तासासिता कथ्यते अत्रापिविरोधः अत्रापिविरोधपरिहारेऽयमर्थोविधेयः रकारककायुक्तापिसितैवसकारेणइतायुक्तासिता सारिकाइत्यत्रसकाररकारककारवर्णाःसंति कांताइतिश्लोकेकृते कांतोयस्याःसाकांता सारिकाइतिशद्बे अंतेकाइतिवर्णोविद्यते कांताकामनीयामनोहरावाइत्येवंविशेषणत्रयोपेतं सातिसारिकाइतिशद्बः रमवानीसोगटीइतिभाषा घटते कथं अरीणरमणवतांमध्येस्थिताऽपिकैश्चित्सार्द्धंवैरंनास्ति परंसाउपरिभागेरक्ता अधोभागेश्वेता परं कांतासुंदराइति तथायथोक्तवादिन्यपिदूतीनैवभवति यथाउच्यतेतथावदति परंदूतीसान अत्रापिविरोधः दूतीधर्मस्त्वीदृशएव सारिकातुपापठ्यमानायथोक्तंपठति परंदूतीनभवति एषासारिकाकथ्यते पोपटी काबरीइतिभाषा इयमपिशाद्बीप्रहेलिका

॥ नीरसउणबहुगुणवंतउभमइनिरंतरनिच्चलहुंतु ॥
तरुगिाज्जिणउपलुपत्रुतसुजोपारिजाणइपाविसोजगिजसु ॥ ७

॥ गुणवृक ॥

अथलौकिकभाषयाशाद्बीप्रहेलिकांदर्शयति नीरसइति व्याख्या नीरसकःपुनर्बहुगुणवान्वर्त्तते योनीरसः सःगुणवान् कथमितिविरोधः उ० गुणवृक गुणवृक्षस्तुकूपकः गुणैर्दवरकैर्बद्धोवृक्षोगुणवृक्षः प्रसिद्धभाषयावाहाणनोकुवाथंभ सःच नीरेजलेशेतेसौनीरशयः वानिर्गतःरसोयस्मात्सःनीरसकः अतिशुष्कत्वात् बहुभिर्गुणैर्दवरकैर्बाध्यते अ

तोबहुगुणवान् तथाभमइ निरंतरंनित्यंभ्रमति परंनिश्चलः सन्तिष्ठति यश्चलन्सःनिश्चलःकथंभवेदितिविरोधः अत्रापिवाहनेनभ्रममाणेनसार्द्धंभ्रमति आत्मनात्वेकत्रैवतिष्ठति तथातरुर्वृक्षइतिगीयतेकथ्यते परं फलपत्रेनस्तःगुणवृक्ष इत्युच्यतेफलंचपत्रंचनभवति जोपरि० योनरोऽस्यार्थस्यपरिक्षांस्वभावंजानाति सःपुमान्बहुयशःप्राप्नोति इत्यक्षरार्थः

॥ घरिघरिचल्लीइसयलपियारीजीवंतविरयरसिाहोनारी ॥
खणिबभ्रइखणिमुच्चिखणिएकल्लीतहजाणसुजहजाइनीपिल्ली८
॥ पाशासारी ॥ इतिप्रहेलिकाजातिः ॥

घरिघरि० व्याख्या गृहेगृहेव्रजति प्रतिगृहंयाति परं सकलजनप्रीता सानारिजीवतियदा तदावैरकरीविरोधकारिणी भवेदितिशेषं क्षणेनबध्यते क्षणेनमुच्यते तथाजानीथयूयं यथाक्षणेनएकाकिनीप्रेरितासतीनोयाति उ० पासासारि पासकसारिका बंधनदवरकेणयुक्ता पोपटीकाबरीभाषा अथवा रमवानापाशासहितसोगठीइतिभाषा सा चपासासारि गृहेगृहेकाष्ठादौव्रजति यत्रैवयातितत्रैवप्रिया साचयावज्जीवतितावत्क्रीडाकर्तुर्वैरकरीदुःखदायका म्रियमाणासुखायस्यात् क्षणेनबध्यतेचालितुंनशक्नोति क्षणेनमुच्यतेचलति एतद्रीत्याऽर्थद्वयंजातं इतिशाद्वीलौकिकभाषा

॥ कालसारादिकंत्द्दद्यमजमारादिगुढकं ॥
॥ विदग्धोदुर्विदग्धानांकुरुतेदर्पशांतये ॥ ९ ॥

कालश्चसारश्चकालसारौ तौआदीयस्यतत्कालसारादिकं त्ददिभवंत्द्दद्यंनामपृष्टं

॥ अनुनेतुंमानिन्याःदयितश्चरणेसरागचरणायाः ॥
॥ यावत्पतितःसतयातत्क्षणमवतारिताःकस्मात् ॥ १० ॥

॥ कालत्त्वद्यं ॥

कालोरजस्वलत्वादिदिनंअवगम्यते अस्यायंभावः कालस्यचसारस्यच हृदयेस्थाप्यतेपश्चात्पृच्छ्यते अतएवत्त्वद्यमितिपंडितैरपिदुःखेनावबुद्ध्यते ईदृशयाश्लोकोक्तया ऽनयास्त्रियायोदयितोदूरीकृतः सःकस्मात्केनहेतुना विद्वन्त्वंब्रूहिइतिपृष्टं अत्रहेतुर्वक्तुर्हृदयस्थोऽप्यनुक्तेनज्ञायतेधीमद्भिरपि अतएवत्त्वद्यं अत्रहेतुमाह रजस्वलत्वात्स्त्रीधर्मत्वात् अहमस्पृश्यास्मीति मास्पृशेतिविज्ञायावज्ञातोनिजदयितत्त्वद्योभावः श्लोकमध्येनभवतिरजस्व कालोत्त्वद्यइति

॥ अवलोक्यस्तनौवध्वाःगुंजाफलविभूषणौ ॥

॥ निःश्वस्यरोदितुंलग्नाकुतोव्याधकुटुंबिनी ॥ ११ ॥

॥ सारघत्त्वद्यं ॥ इतिकालसारजातिः ॥

एतच्चरोदनंतयाकुतःकृतमितिपृष्टव्यं त्त्वद्योऽयंभावः गजादिवधेसमर्थोऽ यंमुक्ताफलानांहारंपरिधापयेदिति पुत्रस्यगजादिवधेऽसमर्थत्वंविज्ञाय तय कुटुंबिन्यावधूकुचावालोक्यानिःश्वस्यचरुदितं क्षीणबलत्वेननिजपुत्रस्यास मर्थत्वंविचारितं स्तनयोरारक्तत्वेनवध्वाःनवयौवनत्वंचिंतितमित्याकूतं पुत्र स्यअसारतोरोदनहेतुः सतुत्त्वद्यःप्रष्टुर्हृदयस्थः कथनंविनानज्ञायते इति सारत्त्वद्यं

॥ दरदिठ्ठचूयमउलंपिच्छियसहियाहिविरहिणीसहियं ॥

॥ नमिउंकिंकेल्लितरुचूउंचरणाहदोकत्तो ॥ १२ ॥

रागद्वेषत्त्वद्यं ॥

लौकिकभाषयाअन्यदपित्त्वद्यमेवदर्शयति दरदिठ्ठति व्याख्या चूतस्या म्रस्यमुकुलंपुष्पोद्गमंइषत्दृष्ट्वा काचित्सखीविरहिणीसतीसख्याःसन्मुखंपश्य ते सखींप्रतिदर्शयित्वाकंकेलितरुरशोकवृक्षःशिरसाप्रणतः चूतश्चरणे नाहतः तत्कुतःइतिवोविचारणीयः भावोऽयंगुढः अत्रभावोश्लोकमध्ये

लिखितोनास्ति किंतु न्हादिवर्त्तते सचायं आम्रेमुकुलदर्शनाद्विरहिण्याः विरहोदीपितः ततोदुःखंकृत्वाआम्रस्तयाचरणेनहतः तथाकंकेलितरुरप्रफुल्लित्वात्स्वसदृशःप्रणतोऽयंहेतुर्ज्ञायते अस्याःभाषायांयाअर्थांतरंलिख्यते ईषत्दृष्ट्वाचूतमुकुलंविरहिणींसखींप्रेक्ष्य सखीभिरशोकवृक्षोनमितः चूतःपादाहतः तत्कस्माद्धेतोः अशोकेपुष्पितेसतिसख्या प्रियःसमेष्यति अतःकारणात्प्रणतः चूतदर्शनेसतिअस्याःस्मरकष्टंजातमितिकारणात्हतः इतिरागद्वेषत्दद्वं

॥ पिच्छंतमणिमिसच्छंपिच्छियवहूयारात्रात्तिभिक्खयरं ॥
॥ दंसियकयाइंसीसेकत्तोदोजाइंसुकुमाइं ॥ १३ ॥

॥ इतिकालसारादित्द्वयजातिः ॥

अन्यच्चत्दद्वंकथयतिलौकिकभाषया पिच्छंतमित्यादिव्याख्या कयाचिद्वधूकया अनिमिषाक्षंनिमेषराहितनेत्रं ईदृशंप्रेक्षंतंविलोकयंतं कंचनभिक्षाचरंभिक्षुकंपिच्छियदृष्ट्वा झटितिशीघ्रं तयाद्वेसंख्येजातीकुसुमेजपापुष्पे तंभिक्षुकंदर्शयित्वा स्वशीर्षेकृतेमस्तकेधृत्वा तस्मैदर्शिते कत्तोतस्तुतः कस्माद्धेतोरित्युच्यताभितिपृष्टव्यम् अत्राप्येवंत्दद्वं भिक्षाचरेणसासभयासस्नेहंविलोकिता तयातुजातीकुसुमगोरुच्चस्थानेधरणेनानिजजातिरेतत्कुसुमवदुज्ज्वला उभयपक्षविशुद्धाऽस्म्यहं त्वद्योग्यानास्मीत्युत्तरंदत्तं अकार्येनैवकर्तव्यं अयंभावोऽस्ति

॥ रविसुतकृतगोकर्णःश्रुतिविषयगुणांबरोवनात्मधरः ॥
॥ नरकशिराःजगदखिलंचिरमव्यादसमरूकूपाणिः ॥ १४

॥ अजगूढं ॥ इयमेकाजातिः ॥

॥ अजमारादिगूढकं अजश्चमारश्चाजमारौ तौआदौयेषांतेऽजमारादयः पदपादार्थाः तेएवगूढाः गुप्ताः यस्मिन्तत्अजमारादिगूढकं अस्य

यंभावः शंभुः तद्वाचीशब्दोगूढोयस्मिन्तत्अजगूढं ३ मारः क
सएवगूढोयस्मिन्ततमारगूढं ४ विभक्त्यंतंपदं तदेवगूढंयस्मिन्त
गूढं ५ श्लोकस्यचतुर्थभागःपादः सएवगूढोयस्मिन्तत्पादगूढं
अर्थःशब्दार्थः सएवगूढोयस्मिन्तत्अर्थगूढं ७ इतिपंचपृष्ठानांउद
रणानिवक्ष्यंते असमरुक्पाणिः नसमोऽसमोविषमः सचासौरुक्च
मरुक्शूलरोगः त्रिशूलमित्यायुधविशेषः सःपाणौहस्तेयस्यसः शूल
णिर्महादेवः एवमेतन्नामगुप्तंज्ञापितं त्रिपादेकैर्गूढार्थविशेषणैरजोम
देवोवर्णितः इतिअजगूढं

॥ कुध्रेनसुप्रीनयनाश्रयाशदग्धोन्मदादर्दुरहर्षकाले ॥
॥ स्वजन्मभक्षाप्रियभोजनाशानृत्यंतिभमानुजगोजभाजः १

॥ मारगूढं ॥ इयमप्येकाजातिः ॥

अत्रविशेष्यपदंगूढं स्वजन्मभक्षप्रियभोजनाशाः इतिविशेष्यपदंस्वस्माज्जन्म
येषांतानिस्वजन्मानिस्वापत्यानि तानिभक्षयंतितेजन्मभक्षाः सर्पास्तेएव
प्रियाः भोजनस्यआशाःयेषांतेईदृशाःमयूराः इतिमयूरनामगोपितं दर्दुर
हर्षकाले दर्दुराणांमंडूकानांहर्षकालोवर्षाकालस्तस्मिन् इतिवर्षानामगो
पितं किंभूताःमयूराः कुंपृथ्वींधरंतितेकुध्राःपर्वतास्तेषामिनःस्वामीहिमाच
लस्तस्यसुःपुत्रीपार्वती तांप्रीणातीतिप्रीर्महादेवस्तस्यनयनस्यआश्रयाशोने
त्रवह्निस्तेनदग्धोयःकामस्तेनउन्मदाउन्मत्ताः अत्रमारस्यनामगोपितं इ
तिमारगूढं ॥

॥ वाताच्छीतिररिध्रोऽवंवोहरतान्महासुरीदयितः ॥
॥ वंडिव्राड्यानौकाःवार्वाहाभोसमस्ताना: ॥ १६ ॥

॥ अथक्षेपकःश्लोकोयं ॥

॥ व्ययवासाः पंचाशिराः यरिर्वीनारिभूषणः ॥

॥ असिरोमाक्रियादर्वेःशंकालायनवीक्षणः ॥ १७ ॥

॥ पदगूढं ॥ इयमेकजातिः ॥

अत्रगूढार्थयोजनावर्तते महासुरीदायितइत्यस्मात्ईदयितइतिविशेष्यपदगुप्तं धृतमस्ति अत्राक्रियादुर्वइत्यस्माद्वाक्यात्उरीतिविशेष्यपदंगूढं ॥ इतिपदगूढं

॥ दयावान्प्रयतः शुद्धः प्रबुद्धःकमलेक्षणः ॥

॥ पापापहस्त्रिभुवनंबुद्धःपायादपायतः ॥ १८ ॥

अत्रबुद्धःपायात् इतिचतुर्थःपादःपूर्वेषुत्रिषुपादेषुगुप्तोऽस्ति कोऽर्थः चतुर्थपादस्यवर्णाः प्रथमद्वितीयतृतीयपादेष्वंतर्गोपिताः संति सम्यक्विचार्यविलोकितव्याः ॥

॥ नमज्जतिक्कचिद्दोषेप्रीणातिजगतोमनः ॥

॥ यएकः सपरंश्रीमान्चिरंजयतिसज्जनः ॥ १९ ॥

॥ पादगूढं ॥ इयमप्येकाजातिः ॥

अत्रापिचतुर्थोपादः गूढः चिरंजयातिसज्जनइति पाश्चात्यत्रिषुपादेषुगोपितोस्तीतिविचार्यसद्भिर्द्रष्टव्यः ॥ इतिपादगूढं ॥

॥ दृष्टोमयासखिब्रूहिरोदयित्वागतोऽद्यमां ॥

॥ भद्रेकल्याणिनीभूयाःप्राचिंपश्यविनिर्मलां ॥ २० ॥

अत्रभावःकः यथेयंप्राचीनिजभर्तुःसूर्यस्यविरहेष्णरात्रौदुःखितापिअधुनासूर्योदयेविकसिता सशोभाजाता तथात्वमपिभर्तुरागमेनविलासंप्राप्स्यसीति भावःसख्याज्ञापितः ॥

॥ दाहिणपव्वणुव्विग्गासम्मलिइलोयणाइंपहियवहुः ॥

॥ निउणसहीउणतीएकंठेविकरोहिंढक्केहि ॥ २१ ॥

॥ अर्थगूढं ॥ इतिगूढजातिः ॥

दाहिणइति ॥ व्याख्या काचित्पथिकवधूर्दक्षिणपवनेनोद्विग्नान्याव्रु
कृतासतीलोचनेसंमीलयति आच्छादयति तदाचतस्याःनिपुणसखं
र्भीणवयस्या तस्याःपथिकनार्याःकर्णयोर्विवरेछिद्रेअंगुल्या ढंकयाति
यतीत्यर्थः तत्सख्याःकर्णाच्छादनंकस्मात्कृतंइत्यर्थोगूढविचारणीयः तत्रं
तयादक्षिणपवनमसहमानयानेजनेत्रेमुद्रिते सख्याचविरहिणीत्वान्माक
चित्कर्णमार्गेणास्याःजीवोव्रजेदित्यतस्तस्याःकर्णौपिहितावितिभावः अथ
ठांतरं पथिकवधूर्लोचनानिसंमीलयति किंभूता दक्षिणपवनोद्विग्ना
निपुणसखीपुनस्तस्याःकंठमपिहस्तैश्छादयति तत्कथं साकंठागतप्राण
अहमेवंमन्ये अन्यथाऽस्याःकंठात्प्राणाःगमिष्यंति

॥ स्तुतिनिंदातदर्थत्वात्द्व्यर्थमर्थद्वयोदयात् ॥
॥ निन्हवात्कथितस्यापिशब्दव्याजादपन्हुतिः ॥ २२ ॥

॥ स्तुतिश्चनिंदाचस्तुतिनिंदे तेविद्येतेयस्यांसास्तुतिनिंदाजातिः ॥
द्वौअर्थौयस्मिन्‌तत्द्व्यर्थंपृष्टं कथितस्याऽस्यशब्दकपटेनामिथ्याभाषणात्
अपन्हुतिरितिनामजातिः एषांत्रयाणामुदाहरणानिमूलग्रंथेसरलानिभवंति

॥ बहुदोषोगुणध्वंसी गोहंताजनपीडकः ॥
॥करोतुविरथोलोक मस्तमाप्तमहोदयं ॥ २३ ॥

॥विष्णोः स्तुतिनिंदे॥

॥ सततमहितजनवत्सलबहुभयपापक्रियापरिभ्रष्टः॥
॥ इहकालिकालेकुपतिर्जगतस्त्वंपरमदुःखकरः ॥ २४ ॥

॥राज्ञःस्तुतिनिंदे ॥ इतिस्तुतिनिंदाजातिः ॥

॥प्रसन्नवदनः श्रीमानयंलब्धमहोदयः ॥
॥करप्रचारसुभगोराजानंदयात्प्रजाः ॥२५॥

॥ चंद्रभूपतौ ॥

॥ विनायकाहितप्रीतिर्देवोगंगांबभारयः ॥
॥ सर्वदोमाधवःसत्वामव्यादव्यर्थविक्रमः ॥ २६ ॥

॥ हरिहरौ ॥ इतिद्व्यर्थजातिः ॥

॥ सीत्कारंशिक्षयतिव्रणयत्यधरंतनोतिरोमांचं ॥
॥ किमुनागरिकोमिलितोनहिनहिसखिहैमनःपवनः ॥२७ ॥
॥ रुचिरस्वरवर्णपदारसभाववतीजगन्मनोहरति ॥
॥ तत्किंतरुणीनीहिनहिवाणीबाणस्यमधुरशीलस्य ॥ २८ ॥

॥ इतिअपन्हुतिजातिः ॥

॥ स्वरेषुबिंदुयुक्तेषुहलानांयदबोधन ॥
॥ तद्बिंदुमदितिप्राहुःकेचिद्बिंदुमतीमिति ॥ २९ ॥

बिंदुःअनुस्वारोविद्यतेयस्मिन्ततत्बिंदुमत्पृष्ठं

॥ मानसीनाभसीत्याद्याबुद्ध्यादौन्यासतोहियाः ॥
॥ बाहुल्येनाप्रयोगास्ताःनेहतासांप्रमर्शनं ॥ ३० ॥

॥ छिठठठठूठाठठंठिष्ठांठिंठोःठुठुष्ठठीठठिठः ॥
॥ ठठठुठठाठिठुठठाठुठठठुठठिठठोठठष्ठंष्ठः ॥
॥ त्रिनयनचूडारत्नंमित्रंसिंधोःकुमुद्वतीदयिततः ॥
॥ अयमुदयतिघुसृणारुणतरुणीवदनोपमश्चंद्रः ॥ ३१ ॥

किमुक्तंभवति बिंदुमज्जातेःप्रथमंश्लोकंविधाय पश्चाद्येश्लोकस्यवर्णाः भवंतितेलुप्यंते तेषांस्थानठेकाराः बिंदवोवाक्रियंते तत्रस्थाःस्वरास्तत्रैव

स्थाप्यंतेएवमेषाबिंदुमतीभवति परंहलानामभावान्नकेनापिसश्लोकोवाच्तुंशक्यते अत्रत्रिनयनचूडारत्नमित्यस्यआर्यावृत्तस्यवर्णस्थानेठकाराःलिताःसंति उपरिष्टाच्चस्वरादत्ताःसंति एतस्यैवश्लोकस्यरीत्याबिंदुमतीखनीया

॥ सखिविधुमध्यगतांकिंतववदनमुतगंडशेखरस्यांकः ॥
॥ एतौविलोकनात्परस्परंविस्मयंकुरुतेदृश्यतेच ॥ ३२ ॥
॥ ठ ठि ठिठु ठ ठ ठं ठिं ठ ठ ठ ठ ठ ठ ठ ठ ठं ठ ठे ठ ठ ठां ठः ॥
॥ ठे ठौ ठि ठो ठ ठा ठ् ठ ठ ठ ठं ठि ठ ठं ठु ठु ठे ठ ठ ठे ठ ॥

॥ बिंदुमज्जातिः ॥

सखिविधुमध्यगतांकिमित्यार्यावृत्तस्याबिंदूनलिखित्वास्वराःदेयाः

॥ क्रियादिकंस्थितंयत्रपदसंधानकौशलात् ॥
॥ स्फुटंनलभ्यतेतच्चाक्रियागुप्तादिकंयथा ॥ ३३ ॥

क्रियाइतिक्रियापदंगुप्तंयास्मिन्तत् क्रियागुप्तंआदिर्यस्मिन्तत्क्रियागुप्तादिकं आदिशब्देन क्रियाकारकसंबंधगुप्तान्यामंत्रितस्यच गुप्तंतथासमासस्यलिंगस्यवचनस्यच ॥ सुप्तिङ्रूपस्यद्वयस्यवचनस्यच कारकशब्दे कर्ताकर्मचकरणंसंप्रदानंतथैवच ॥ अपादानाधिकरणमित्याहुःकारकाणिषट्

॥ राजन्नवघनश्यामानिस्त्रिंशाकर्षदुर्जयः ॥
॥ आकल्पंवसुधामेतांविद्विषोघ्वरणेबहून् ॥ ३४ ॥
॥ पुंस्कोकिलकुलस्यैतेनितांतंमधुरारवैः ॥
॥ सहकारद्रुमाःरम्याःवसंतेकामपिश्रियं ॥ ३५ ॥

॥ इतिक्रियागुप्तजातिः ॥

एतानिअष्टपृष्टानांउदाहरणानिवक्ष्यंतेऽनुक्रमेराजन्नवघनश्यामइत्यत्र ॥ अव
विद्विषोद्धरणेइत्यत्र द्य नितांतमधुरारवैरित्यत्रअधुः

॥ नकरोतिनामरोषंनवदतिपरुषंनहंत्ययंशत्रून् ॥
॥ रंजयतिमहीमखिलांतथापिधीरस्यवीरस्य ॥ ३६ ॥
॥ शरदिंदुकुंदधवलंनगपतिनिलयंमनोहरंदेवं ॥
॥ यैःसुकृतंकृतमनिशंतेषामेवप्रसादयति ॥ ३७ ॥

॥ कर्तृगुप्तं ॥

अत्रधीरस्येतिपदेधीः मनोह्नरमित्यत्रमनः इतिकर्तृपदंगुप्तं

॥ शीत्करासारसंवाहीसिरोजवनमारुतः ॥
॥ प्रक्षोभयतिपांथस्त्रीनिःश्वासैरिवमांसलः ॥ ३८ ॥
॥ सुभगतवाननपंकजदर्शनसंजातनिर्भरप्रीतेः ॥
॥ शमयतिकुर्वन्दिवसःपुण्यवतःकस्यरमणीयः ॥ ३९ ॥

॥ इतिकर्मगुप्तं ॥

सरोजवनमारुतइत्यत्रसरः शमयतीत्यत्रशामितिकर्मपदंभिन्नत्वेन ॥

॥ पूतिपंकमयेऽत्यर्थंकासारेदुःखिताअमी ॥
॥ दुर्वारामानसंहंसाःगमिष्यंतिघनागमे ॥ ४० ॥
॥ अहंमहानसायातःकल्पितोनरकस्तव ॥
॥ मयामांसादिकंभुक्तंभीमंजानीहिमांबक ॥ ४१ ॥

॥ करणगुप्तं ॥

दुःष्टंवाःजलंदुर्वाः तेनदुर्वाग कलुषितजलेन महच्चततूअनःशकटंचम
हानःतेनमहानसा

॥ अंभोरुहमयेस्नात्वावापीपयासिकामिनी ॥
॥ ददातिभाक्तिसंपन्नापुष्पसौभाग्यकाम्यया ॥ ४२ ॥
॥ प्रशस्त्यायुक्तमार्गस्यतवसंमानितांश्रिताः ॥
॥ स्पृहयंतिनकेनामगुणरत्नालयप्रभो ॥ ४३ ॥

॥ संप्रदानगुप्तं ॥

अंभोरुहमयेइत्यत्रअये इ:कामस्तस्मैअये चतुर्थी प्रशस्त्यायुक्तमार्गस्येत्यत्रप्रशस्त्यैकल्याणाय उक्तमार्गस्य

॥ शिलीमुखैस्त्वयावीरदुर्वारैर्निर्जितोरिपुः ॥
॥ बिभेत्यत्यंतमलिनोवनेऽपिकुसुमाकुले ॥ ४४ ॥
॥ सरसीतोऽयमुद्धृत्यजनःकंदर्पकारकं ॥
॥ पिबत्यंभोजसुरभिस्वच्छमेकांतशीतलं ॥ ४५ ॥

॥ अपादानगुप्तं ॥

अलिनोभ्रमरात् सरसीतःसरोवरात्

॥ याकटाक्षच्छटापातैःपवित्रयतिमानवं ॥
॥ एकांतेरोपितप्रीतिरस्तिसाकमलालया ॥ ४६ ॥
॥ विपद्यमानतासिद्धासर्वस्यैवानिरूष्मणः ॥
॥ यथाऽत्रभस्मपश्यांचनिर्वाणंहंत्ययंजनः ॥ ४७ ॥

॥ अधिकरणगुप्तं ॥ इतिकारकगुप्तजातिः ॥

एकृष्णे कांतिभर्तारि एवंसप्तमीगुप्ता विपद्यमानतेत्यत्र।विपादिकष्टे

॥ तूणेवमधुमासोस्मिन्सहकारद्रुमंजरी ॥
॥ इयमुन्निद्रमुकुलैर्भातिन्यस्ताशिलीमुखा ॥ ४८ ॥

॥ प्राप्तमदोमधुमासः प्रबलारुक्प्रियतमोपिदूरस्थः ॥
॥ असतीसंन्निहितेयंसंत्द्दतशीलासखीनियतं ॥ ४९ ॥

॥ संबंधगुप्तं ॥ एकाजातिः ॥

उन्निद्रमुकुलाए: इतिभिन्नेपदेकियेते इ: कामस्तस्यए: षष्ठ्येकवचनं
अत्रमास: चंद्रस्य

॥ सर्वज्ञेनत्वयाकिंचिन्नास्त्यविज्ञातमीदृशं ॥
॥ मिथ्यावचस्तथाचत्वमसत्यंवेत्सिनक्काचित् ॥ ५० ॥
॥ कमलेकमलेनित्यंमधूनिपिबतस्तव ॥
॥ भविष्यतिनसंदेहःकुष्टंदोषाकरोदये ॥ ५१ ॥

॥ आमंत्रितगुप्तं ॥ इयमथैकाजातिः ॥

सर्वंजानातीतिसर्वज्ञस्तस्यइन: स्वामी तत्संबोधनं हेसर्वज्ञेन हेपंडितश्रेष्ठ
कमले कं अले इतिपदच्छेद: हेअले हेभ्रमर ॥

॥ विषादीभिक्ष्यमश्नातिसदारागंनमुंचाति ॥
॥ रुष्टेनापित्वयावीरशंभुनारिःसमःकृतः ॥ ५२ ॥
॥ नित्यमाराधितादेवैःकंसस्याद्विषतस्तनुः ॥
॥ मंडलाग्रंगदाशंखंचक्रंजयतिबिभ्रती ॥ ५३ ॥

॥ इतिसमासगुप्तं ॥ इयमेकाजातिः ॥

विषंकालकूटं अस्तिस:विषादी दारै:सहवर्तमान:सदार: उभयत्रद्वि
तीयादितत्पुरुष:समास: ॥ नित्यमाराधितादेवैरित्यत्रनित्यमा नित्यंमाल
क्ष्मीर्यस्यांसाबहुव्रीहिः ॥

॥ नितांतस्वच्छत्द्दयंसखिप्रेयान्समागतः ॥
॥ त्वांचिराद्दर्शनप्रीत्यायःसमालिंग्यरंस्यते ॥ ५४ ॥

॥ कलिकाऽलिमियंयावदगस्त्यस्यमुनेरपि ॥
॥ मानसंखंडयत्यत्रशशिखंडानुकारिणी ॥ ५५ ॥
॥ लिंगगुप्तं ॥ इयमर्थैकाजातिः ॥

नितांतस्वच्छहृदयामित्यत्र नितांतहृदयं नितांतमतिशयेनस्वच्छंनिर्मलंहृत्हृदयंयस्यसः नितांतेस्वच्छहृत् इतिपुल्लिंग कलिकालप्रियमित्यत्र इयंअगस्त्यस्यवृक्षस्यकलिका अलंअत्यंतं मुनेः मनःखंडयति कलिकाइति स्त्रीलिंगनिर्देशः

॥ प्रमोदंजनयत्येवंसदाराःगृहमेदिनः ॥
॥ यदिधर्मश्चकामश्चभवेतांसंगताविमौ ॥ ५६ ॥
॥ सुब्वचनगुप्तं ॥ इयमेकाजातिः ॥

सदाराइत्यत्रराः इतिप्रथमैकवचनंसुबंतं गृहमेदिनइतिषष्ठी

॥ कस्मात्त्वंदुर्बलाऽसीतिसख्यस्तांपरिपृच्छाति ॥
॥ त्वयिसान्निहितेतासुदद्यात्कथयसोत्तरं ॥ ५७ ॥
॥ तिङ्वचनगुप्तं ॥ इयमर्थैकाजातिः ॥

अतिशयेनपृच्छंतीतिपरिपृच्छाति इतियङ्लुगंतेअंतिपरतोरूपमास्ति इदमेवरूपमेकवचनंज्ञायते नतुबहुवचनेनइत्यःतिङ्वचनगुप्तं

॥ अन्योप्यर्थःस्फुटोयत्रमात्रादिच्युतकेष्वपि ॥
॥ प्रतीयतेविदुस्तज्ज्ञास्तन्मात्राच्युतकादिकं ॥ ५८ ॥
॥ महाशयमतिस्वच्छंनीरंसंतापशांतये ॥
॥ खलवासादतिश्रांताःसमाश्रयतहेजनाः ॥ ५९ ॥

यत्रप्रश्नेमात्राबिंदुविसर्गाणांच्युतकेषुकसेषुसत्सुद्वितीयोऽर्थः प्रकटोज्ञायते तत्मात्रादिच्युतकादिकं च्युतकशद्बेनकुत्रचित्स्थानेनाशः कुत्रचित्

विनिमयः सालटोपालोटोइतिभाषा मात्राच्युतकंआदिर्यस्मिन्ततूमात्राच्युतकादिकं आदिशब्देन मात्राबिंदुविसर्गाणांच्युतकान्यक्षरस्यच स्थातव्यंजनयोश्चापि इति एकस्मिन्नर्थे नीरंजलं द्वितीयेऽर्थेनीरशब्दस्यईकारस्थानेअकारःक्रियते तदानरंइत्यवशिष्यते

॥ तुषारधवलःस्फूर्जन्महामणिधरोऽनघः ॥
॥ नागराजोजयत्येकःपृथिवीधरणक्षमः ॥ ६० ॥

॥ मात्राच्युतकं ॥ एकाजातिः ॥

नागराजःशेषनागःएकस्मिन्नर्थे द्वितीयेऽर्थेनागराजइत्यस्यआकारस्थाने अकारःक्रियते तदानगराजइतिस्यात् हिमाचलः

॥ सुश्यामाचंदनवतीकांतातिलकभूषिता ॥
॥ कस्यैषानंगभूःप्रीतिंभुजंगस्यकरोतिन ॥ ६१ ॥

एकस्मिन्नर्थेअनंगभूःकामस्यस्थानंईदृशीस्त्री द्वितीयेऽर्थेअनुस्वारोलुप्यते तदानगभूःपर्वतस्यमलयाचलस्यभूमिः

॥ यथासत्प्रसवःस्निग्धःसन्मार्गविहितस्थितिः ॥
॥ तथासर्वाश्रयःसत्यमयंमेवकुलद्रुमः ॥ ६२ ॥

॥ बिंदुच्युतकं ॥ इयमथैकाजातिः ॥

एकस्मिन्नर्थेअयंमेमम बकुलद्रुमोअशोकवृक्षः बवयोरैक्यं द्वितीयेऽर्थे अयंमेवकुलद्रुमइत्यत्रायमित्यस्मादनुस्वारस्त्याज्यः तदाऽयमेवकुलद्रुमइति स्थितं अयंपुमान् कुलेद्रुमइव द्रुमोवृक्षः

॥ महीरुहोविहंगानामेतद्दद्यैःकलापिनां ॥
॥ विरुतैःस्वागतानीवनीरवाहायकुर्वते ॥ ६३ ॥

एकस्मिन्नर्थेतद्दद्यैः तृतीयाविभक्तिः मनोहरैर्विरुतैःशब्दैःद्वितीयवारंतद्द्यै

रित्यत्रविसर्गलोपेकृते त्वद्दैकलापिनांइतिजात त्वद्वंसुंदरंएकंअद्वितीयं
लपंतिवदंतितेत्वद्दैकलापिनस्तेषां विहंगानां

॥ अगस्त्यस्यमुनेःशापाद्ब्रह्मस्पंदनमास्थितः ॥
॥ महासुःखात्परिभ्रष्टोनहुषःसर्पतांगतः ॥ ६४ ॥

॥ विसर्गच्युतकं इयमेकाजातिः ॥

एकवारं महासुः महांतोऽसवःप्राणाःयस्यसः खात्आकाशात् द्वितीयवारं सुरित्यत्रविसर्गलोपेकृते महासुत् महच्चतत्सुखंचतस्मात् राज्यात्

॥ महानपिसुधीरोऽपिबहुरत्नयुतोऽपिसन् ॥
॥ विरसःकुपरीवारोनदीनःकेनसेव्यते ॥ ६५ ॥

नदीनांइनःस्वामी नदीनःसमुद्रइत्येकस्मिन्नर्थेद्वितीयेऽर्थेनदीनइत्यस्मात्नकारंसस्वरंलुप्यते तदादीनइतितिष्ठति दीनशब्देन कृपणधनपुमान्

॥ सुशीलःस्वर्णगौरांगःपूर्णचंद्रनिभाननः ॥
॥ सुगतःकस्यनप्रीतिंतनोतित्वद्दिसंस्थितः ॥ ६६ ॥

॥ अक्षरच्युतकं ॥ इयमथैकाजातिः ॥

एकस्मिन्नर्थे सुगतोबुद्धःजिनः द्वितीयेऽर्थे सुगतइत्यस्मात्गकारःसस्वरोलुप्यते तदासुतइतिस्यात् सुतःपुत्रः

॥ तनोतुतेयस्यफणीगरुत्मान् ॥
॥ पाणौमुरारिर्दयिताचशय्या ॥
॥ नाभौस्फुरन्भद्रमशुभ्रदेहः ॥
॥ पद्मागतिश्चक्रमसौविधाता ॥ ६७ ॥

॥ हरःक्षयीतापकरःसुरेशःशांतोहरिर्गोत्ररिपुर्विवस्वान् ॥

॥ चंद्रोद्विजिव्हाश्रितइत्युपेक्ष्यलक्ष्म्यावृतःपातुविधिर्जगंति ६८

॥ स्थानच्युतकं ॥ इयमेकाजातिः ॥

कर्तृकर्माक्रियापदानिस्थानांतरेधृतत्वात्अन्वयोदुर्लभोयस्यवृत्तस्य तद्वृत्तं स्थानच्युतकंकथ्यते एवंसर्वत्रापिद्रष्टव्यं एवंयेषांश्लोकानांमध्येअर्थयोजनिकायांकृतायांसत्यांयोजनिकास्थानांतरेधृतास्ति योयस्यशब्दस्यान्वयत्वेनलगतिसशब्दस्तत्पार्श्वेधृतोनास्ति अतएवस्थानच्युतकं

॥ भिक्षवोरुचिराःसर्वेरसाःसर्वजनाप्रियाः ॥

॥ क्षमायाममभिसंपन्नाद्दश्यंतेमगधेपरं ॥ ६९ ॥

एकस्मिन्नर्थेभिक्षवःश्वेतांबराः द्वितीयेऽर्थेभिक्षवइतिपदाद्भकारलोपःक्रियते तदाइक्षवइतिगुडवृक्षाः

॥ सत्यशीलदयोपेतोदाताऽसुचिरमत्सरः ॥

॥ जिनःसर्वात्मनासेव्यःपदमुच्चैरभीप्सता ॥ ७० ॥

॥ व्यंजनच्युतकं ॥ इयमेकाजातिः ॥

एकस्मिन्नर्थेऽअजिनोवीतरागः द्वितीयेऽर्थेजिनएतस्माज्जकारोलुप्यते तदाइनइतिस्थितं इनः स्वामीराजावा

॥ स्फोटयित्वाऽक्षरंकिंचित् पुनरन्यस्यदानतः ॥

॥ यत्रापरोभवेदर्थश्च्युतदत्ताक्षरंहितत् ॥ ७१ ॥

च्युतेनाशेसतितस्मिन्नेवस्थानेदत्तंअक्षरमन्यत्यास्मिंस्तत्च्युतदत्ताक्षरंपृष्टं

॥ सदागतिहतोच्छ्रायस्तमसोवश्यतांगतः ॥

॥ अस्तमेष्यतिदीपोयंविधुरेकःशिवेस्थितः ॥ ७२ ॥

॥ पूर्णचंद्रमुखीरम्याकामिनीनिर्मलांबरा ॥

॥ तनोतिकस्यनस्वांतमेकांतमदनातुरं ॥ ७३ ॥

॥ च्युतदत्ताक्षरजातिः ॥

एकस्मिन्नर्थेदीपः द्वितीयेऽर्थे दीपइत्यत्रपकारंलुप्त्वाततस्थानेनकारोदं
ते तदादीनइति अयंदीनोविधुश्चंद्रःएकएवशिवेस्थितः एकस्मिन्नर्थेका
नीस्त्री द्वितीयेऽर्थेयामिनीरात्रिः

॥ अंबरमंभसिपत्रंचारातिःपीतमहिगणस्यददाह ॥
॥ यस्यवधूस्तनयंगृहमब्जापातुसवोहरलोचनवन्हिः ॥ ७४

॥ स्थानच्युतकं ॥

॥ कृतिस्तुधर्मदासस्यासौगतस्यतपस्विनः ॥
॥ विदग्धानांमुखांभोजप्रविकाशकरीपरा ॥ ७५ ॥

॥ इतिचतुर्थः परिच्छेदः ॥

॥ इतिश्रीधर्मदाससूरिविरचितंविदग्धमुखमंडनं ॥
॥ काव्यंसटीकंसमाप्तं ॥

